आरभटी यथा—

आकण्ठाकृष्टचापच्युतनिशितशरश्रेणिलोलायमान-
क्षुद्रक्षोणीशसेनाविदलितवपुषं मूर्च्छितं भानुमन्तम् ।
उद्बोधं प्रापयन्ति प्रतिभटकरिणो नञ्जभूभृद्विभिन्ना
धावन्तः साम्पराया [त्] सरभसविचरत्कण्ठतालानिलेन ॥

[ ईषन्मृद्वर्थसन्दर्भा भारती वृत्तिरुच्यते । ]

भारती यथा—

गाम्भीर्ये जलधिर्बले फणिपतिर्धैर्ये च भर्माचलः
प्रज्ञायां सुरदेशिकः परमदच्छेदे पुनर्भार्गवः ।
सौन्दर्ये कुसुमायुधः सुरतरुर्याच्ञागतार्थिव्रजे
प्राग्य(श्लाघ्य?)स्तद्भुवि नञ्जभूपतिमणेर्धन्यः किमन्यो जनः ॥

[ ईषत्प्रौढार्थसन्दर्भा सात्वती वृत्तिरिष्यते । ]

सात्वती यथा—

नञ्जक्ष्मापवरूथिनीपरिवृढप्रोद्भूतभीमध्वन-
द्भेरीभाङ्कृतितर्जिता निशि रणे खाना(योधा?)जवाद्वाजिनः ।
आरुह्यातिदरेण मूढमनसः पुच्छाग्रजाग्रन्मुखाः
खड्गैरश्लथवर्मभिः सरभसं छिन्दन्ति तद्वीचिकाः ॥

[ मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी । ]

मध्यमकैशिकी यथा—

नेता नञ्जनृपालकस्तव ममाप्येतादृशैरुत्सवैः
सर्वा अप्यनुरञ्जयत्यनुपदं भूयः प्रियम्भावुकाः ।
किं ते शौर्यमिदं पदेन महता लाटे किमुज्जृम्भसे
त्वं मां पश्यसि तादृशं तु कलहायन्ते समस्ता भुवः ॥

[ मध्यमारभटी प्रौढेऽप्यर्थे नातिमृदुक्रमा । ]

मध्यमारभटी यथा—

तुरंगमखुरक्षुण्णक्ष्माधूलीसमुत्थिता ।
पङ्किलान् कुरुते सप्त सागरान्नञ्जभूपतेः ॥

एवं रसान्तरेऽप्युदाहरणं द्रष्टव्यम् । वैदर्भ्यादीनां शब्दगुणाश्रितानामर्थ-

विशेषनिरपेक्षतया केवलसन्दर्भे सौकुमार्यप्रौढत्वमात्रविषयत्वात् कैशिक्या-दिभ्यो भेदः । सन्दर्भस्यातिमृदुत्वं नाम असंयुक्तकोमलवर्णबन्धत्वम् । अति-प्रौढत्वं नाम परुषवर्णविकटबन्धनत्वम् । संयुक्तमृदुवर्णेषु ईषन्मृदुत्वम् । अवि-कटबन्धपरुषवर्णेषु ईषत्प्रौढत्वम् । ततः–

" अत्यन्तसुकुमारौ द्वौ शृङ्गारकरुणौ रसौ ।
अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्तितौ ॥
हास्यशान्ताद्भुताः किञ्चित् सुकुमाराः प्रकीर्तिताः ।
ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ ॥"

यत्र शृङ्गारकरुणरसावतिकोमलसन्दर्भेण वर्ण्येते तत्र कैशिकी । यत्र रौद्रबीभत्सावतिप्रौढेन सन्दर्भेण निरूप्येते तत्रारभटी । यत्र नातिसुकुमारा हास्यशान्ताद्भुता नातिसुकुमारेण तेन समर्थ्यन्ते तत्र भारती । यत्र नातिप्रौढौ वीरभयानकौ नातिप्रौढेन सन्दर्भेण प्रतिपाद्येते तत्र सात्वती ।

अथ रीतीनां स्वरूपमुदाहरणं च कथ्यते ।

"रीतिर्नाम गुणाश्लिष्टपदसन्दर्भता मता"[1] ।

सा त्रिधा–वैदर्भी गौडी पाञ्चाली चेति ।

"बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता ।
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ॥"

यथा—

निर्जितारातिवर्गस्य नञ्जराजशिखामणेः ।
जातं कीर्तिप्रतापाभ्यां पाटलं भुवनत्रयम् ॥

यथा वा—

कामाभिरामवपुषः कळलेकुलेन्दो–
र्नञ्जक्षमापतिमणेर्ललितान् विलासान् ।
कन्दर्पकार्मुकगुणस्य च धीरनादा–
नाकर्णयन्ति युगपन्नरपालकन्याः ॥

"ओजःकान्तिगुणोपेता गौडीया रीतिरिष्यते ।"

---

१ सङ्घटनात्मता OL.

यथा—

नञ्जक्षोणीन्द्रसैन्यक्षणमथितमदोच्चण्डशुण्डालकुम्भ-
प्रोद्यत्स्वच्छन्दचेलाञ्चलमिलितनवस्थूलमुक्ताफलानि ।
निर्वर्ण्यागण्यलभ्यं फलमिति हि मिथो बोधयन्त्यो निमित्तै-
र्वल्गन्त्युद्वेलहर्षाः सुरपुरि सुदृशः प्रेयसः प्राप्तुकामाः ॥

यथा वा—

भेरीभाङ्कारनिर्भिन्नगर्भाविर्भवदर्भकाः ।
भेजिरे नञ्जभूभर्त्तुर्भूभृद्भूमिमरिस्त्रियः ॥
"पाञ्चाली रीतिर्वैदर्भीगौडीरित्युभयात्मिका" ।

यथा—

जेतुर्नञ्जमहीपतेर्जलधरश्यामां कृपाणीलतां
वेगोत्पाटितकुञ्जरव्रजशिरःसंलीढमुक्ताफलाम् ।
पश्यद्भिः प्रतिपक्षपार्थिवभटैः सङ्ग्रामलीलोद्भटै-
र्दंष्ट्राकोटिकरालवक्त्रकुहरा काली मुहुः स्मर्यते ॥

अथ शय्या—

"या पदानां पराऽन्योन्यमैत्री शय्येति कथ्यते ।"

यथा—

शाणोत्तेजितपद्मरागशकलप्राग्भारशोभावराः
फुल्लत्किंशुककोरकप्रसृमरच्छायाधरीसोदराः ।
प्रत्यूषोन्मिषदब्जिनीपरिवृढप्रौढप्रभाडम्बराः
प्रत्यग्राः प्रसरन्ति नञ्जनृपतेर्जैतुः प्रतापोर्मयः ॥

अथ पाकस्वरूपं निरूप्यते ।

"अर्थगम्भीरिमा पाकः स द्विधा हृदयङ्गमः ।
द्राक्षापाको नालिकेरपाकश्च प्रस्फुटान्तरः ॥
द्राक्षापाकः स कथितो बहिरन्तः स्फुरद्रसः ।"

यथा—

सलज्जं सौत्सुक्यं प्रणयमधुरं प्रेमललितं
सवैलक्ष्योदारं स्मितविकसितालोकनमपि ।

१ केकर OL.

सहर्षं पश्यन्ती स्मरमभिनवं नञ्जनृपतिं
रतेर्लीलालक्ष्मीं भजति सुमुखी कामपि नवाम् ॥

यथा वा—

शोभासमुल्लसितकान्तितरङ्गिताङ्ग्यो
नञ्जक्ष्मारमणचन्द्रमपाङ्गयन्त्यः ।
मुह्यन्ति मञ्जु विहरन्ति च विभ्रमन्ति
रं॑ज्यन्ति चापि विलसन्ति हसन्ति कान्ताः ॥

'स नालिकेरपाकः स्यादन्तर्गूढरसोदयः ।'

यथा—

तारुण्योद्गमलासकेन सुतनोरङ्गे पुरो रञ्जिते
तं॑त्प्राप्तिस्फुटघर्मबिन्दुकलिकास्तन्वन् स्मरस्तावकः ।
लावण्यश्रियमेव विभ्रमवतीमुद्बोध्य चानर्तयन्
अस्या मानसवृ॑त्तिमाशु तनुते नञ्जेन्द्र ते कौतुकम् ॥

अत्र न द्रागर्थप्रतिपत्तिः । पाकभेदा यथासम्भवमूह्याः ।

अथ व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यामस्फुटत्वेन त्रिविधं काव्यम् । व्यङ्ग्यस्य प्राधान्ये उत्तमं काव्यं ध्वनिरिति व्यपदिश्यते । अप्राधान्ये मध्यमं काव्यं गुणीभूतव्यङ्ग्यमिति कथ्यते । व्यङ्ग्यस्यास्फुटत्वेऽधमं काव्यं चित्रमिति कथ्यते ।

ध्वनिर्यथा—

भूयोऽस्मानवलोकितुं यदि मतिः कान्त त्वया दीयता-
मद्यैवैकमदर्शनाञ्जनममुं जानासि दत्तं स्मरम् ।
इत्थं स्वस्ववधूजनस्य वचनान्याकर्ण्य नम्रानना
जाता नञ्जनरेन्द्रदर्शनसमुद्युक्ता विदेश्या नृपाः ॥

व्यङ्ग्यस्य प्राधान्यं नाम वाच्याद्रम्यतया शब्दैर्निगृह्य विवक्षितत्वम् । तदितरत्वमप्राधान्यमत एव गुणीभावनामा ।

यथा—

स्थाने रतिः सा युवतीषु मान्या
यस्यां स्वयं स्निह्यति चित्तमस्य ।

१ नृत्यन्ति OL. २ तत्प्राप्त OL. ३ तृप्ति CL.

अन्योन्यमेवं मुहुरालपन्त्यः
पश्यन्ति नञ्जक्षितिपं मृगाक्ष्यः ॥

अत्र नञ्जभूपतिं पश्यन्तीनां मृगाक्षीणां प्रसिद्धमन्मथप्रियाया रतेः प्रशंसनेन पुरतो दृश्यमाने मदनाभेदप्रतीतिर्जायत इति वस्तुनो व्यङ्ग्यस्य झटिति प्रतीतेः अगूढत्वादस्य गुणीभूतत्वम् ।

शब्दार्थोभयभेदेन चित्रं त्रिविधम् ।

शब्दचित्रं यथा—

नञ्जक्षोणिक्षिदध्यक्षरिङ्खत्कौक्षेयको रणे ।
भूक्ष( भ्राज ? )ते दुसहर्यक्षपक्षशिक्षणदक्षिणः ॥

अर्थचित्रं यथा—

नञ्जराजविपक्षौघदुर्गभ्रमणदुर्दशाम् ।
निरीक्ष्य निर्झरव्याजान्मुञ्चन्त्यश्रूणि पर्वताः ॥

उभयचित्रं यथा—

साम्राज्यलक्ष्मीसहजानुराग—
प्राग्भारधुर्यं प्रधनैकधैर्यम् ।
श्रीनञ्जराजं श्रितकल्पभूजं
श्रयन्ति भूपाः शमितावलेपाः ॥

ध्वनिहेतवो वक्त्रादयः । तदुक्तम्—

" वक्ता बोध्यश्च काकुश्च देशः कालोऽन्यसन्निधिः ।
वाच्यं[1] प्रकरणं चेष्टेत्याद्याः स्युर्ध्वनिहेतवः ॥"

तत्र वक्तृविशेषस्य ध्वनिहेतुत्वं यथा—' भूयोऽस्मानि'त्यादि [२०प] । यद्यदृश्याञ्जनमदत्वा प्रयासि तर्हि दुस्स्मरः तत्क्षणमेवास्मान् व्यापादयेदिति भूयो दर्शनमेव दुर्लभं भवेदिति वक्तृविशेषात् व्यज्यते ।

बोध्यविषेशाद्यथा—

कस्याश्चिदुर्वीपतिकन्यकाया
नञ्जक्षितीन्द्रस्य विलोकनेन ।
उत्कण्ठितायाः कथयन्ति सख्यः
शाकुन्तलादीनितिहासवादान् ॥

1 वाक्यं CL.

अत्र शकुन्तलेव गान्धर्वविवाहस्त्वयाऽपि कार्यः । स च तस्या इव तवापि सर्वजनसम्मान्यो भवेदिति बोध्यविशेषो ध्वन्यते ।

काकोर्ध्वनिहेतुत्वं यथा—

रे रे विपक्षसचिवा भवतां वचांसि
नञ्जक्षितीन्द्रचरणं शरणं व्रजन्ति(जेति?) ।
श्रुत्वाऽपि भूरि बधिरोऽजनि यः स युष्मान्
निन्दत्यसौ न दुरहङ्कृतिमात्मनीनाम् ॥

अत्र काका अद्य दुर्दशायां युष्मान्निन्दति न स्वाहङ्कृतिमिति भवन्तो युक्तार्थबोधकत्वान्न निन्द्याः, किन्तु स्वाहङ्कृतिरेवेति वस्तु व्यज्यते ।

देशविशेषाद्यथा—

शक्त्यादिवस्तुप्रचयं तु ( यस्य? ) वाचां
निर्माणहेतुत्वपरान्निबन्धान् ।
नञ्जक्षितीन्द्रस्य सभां विशन्तो
विपश्चितः केऽपि न विश्वसन्ति ॥

अत्र नञ्जराजसभारूपदेशविशेषमहिम्ना शक्त्यादिसामग्रीं विनाऽपि सर्वे कवयो भवन्तीति व्यज्यते । तेन च नञ्जराजे भोजराजाधिक्यं व्यज्यते ।

कालविशेषो यथा—

नञ्जनृपचरणसेवारभसपराधीन रमण नतिरेषा ।
बहुभाषिणी न चाहं मधुसमयः सोऽयमुत्सवो जगताम् ॥

अत्र मधुसमय इति कालविशेषनिर्देशेन नञ्जराजसेवने त्वरितोऽपि भवानिदानीमेव मागमदिति प्रवासनिषेधो व्यज्यते ।

अन्यसन्निधानाद्यथा—

रोषं न का वा कलयेत चित्ते
रोमाञ्चमालोक्य ममाग्र्यमङ्गे ।
अविस्मृता वीरनृपालसूनो-
र्बाहुप्रतापा बत भीषयन्ति ॥

अत्र बाहुप्रतापा भीषयन्तीत्यर्थस्य सन्निधानमहिम्ना तज्जितोऽ(तज्जनितोऽ ?) यं रोमाञ्चः । ततो न कस्या अपि रोषावकाश इति व्यज्यते ।

वाच्याद्यथा—

नञ्जेन्द्रखड्गद्युतिभङ्गिभाजस्तमस्ततेर्नर्मपदं[1] दिवापि ।
तापिच्छवाटी [इ] वधूटि वल्लीसौरभ्यचारो वलते समीरः ॥

इदं पुराङ्गनामभिसारिकां प्रति सखीवचनम् ।

इहैव क्रीडार्थं प्रविशेति वस्तु व्यङ्ग्यम् ।

प्रकरणाद्यथा—

अनम्रदैत्या(दसा ?)न्धतमिस्रभानोर्नञ्जक्षितीन्द्रस्य भटा वयं स्मः[2] ।
कुतो भुवि भ्राम्यत भो महीपाः स्वरक्षणोपायमुपाश्रयध्वम् ॥

अत्र भूभ्रमणे प्रयोजनं नास्तीति, अस्मानेव शरणं व्रजेति प्रकरणेन वस्तु व्यज्यते ।

चेष्टादिना यथा—

श्रीनञ्जराजस्य गुणान्वराणां प्रस्तावनायां जननीसमक्षम् ।
नरेन्द्रकन्याः श्रवणैः पिबन्त्यो मुहुः पदाग्रेण महीं लिखन्ति ॥

अत्र पदाग्रेण महीं लिखन्तीति चेष्टया नञ्जराज एव तासामभिलाष इति वस्तु व्यज्यते ।

निर्विकाराद्यथा—

तृणेषु दष्टेषु विरोधिवर्गैर्नञ्जक्षितीन्द्रात्मजसैनिकेषु ।
न वीरवादो न धनुर्विकर्षो न भ्रूविभङ्गो न च गर्जितानि ॥

अत्र सैनिकानां विकाराभावकथनेन तृणचर्वणदर्शितदैन्यवृत्तिषु विरोधिवर्गेषु क्रोधोपशमो व्यज्यते ।

इति श्रीपरमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादित-
निःसहायदैनन्दिनप्रबन्धनिर्माणसाहसिकनिखिलविद्वज्जनलालनीयसर-
ससाहित्यसम्प्रदायप्रवर्तकनरसिंहकविरचिते नञ्जराज-
यशोभूषणे अलङ्कारशास्त्रे काव्यनिरूपणं
नाम द्वितीयो विलासः ॥

---

१ विनम्र OL.  २ सम्भा OL.

# अथ तृतीयो विलासः

करुणारसकल्लोलकलितापाङ्गवीक्षणम् ।
कन्दर्पजनकं धाम कल्याणानि करोतु नः ॥

अथ ध्वनिविशेषा निरूप्यन्ते ।

ध्वनिस्तावद्द्विविधः । लक्षणामूलः शक्तिमूलश्चेति । एतावेवाविवक्षितवाच्यविवक्षितान्यपरवाच्यावित्युच्येते । तत्राद्योऽर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यतया द्विविधः । अजहज्जहल्लक्षणामूलतयेति यावत् । अयमभिसन्धिः । आकाङ्क्षायोग्यतयोर्वाक्यार्थप्रतीतिहेतुत्वात्प्रयुक्तपदार्थस्यानुपयोगेऽनुपपत्तौ वा तयोरभावान्न वाक्यार्थस्फूर्त्तिरित्यर्थान्तरसङ्क्रमणात्यन्ततिरस्कारयोरवतारः । योऽर्थ उपपद्यमानोऽपि तावताऽनुपयोगात् स्रजि सूत्रवदुपयुक्तार्थान्तरवलने स्वयं न दृश्यते, सोऽर्थान्तरसङ्क्रमितवाच्यः ।

यथा—

स्फुरतोर्नञ्जराजस्य कीर्त्तिपुञ्जप्रतापयोः ।
हिमांशुर्हरिदश्वश्च वर्त्तेते वियदङ्गणे ॥

अत्र वर्त्तेते इति धातुना केवलवर्त्तमानस्यानुपयोगान्नैरर्थक्येन वर्त्तमानरूपार्थान्तरसङ्क्रमिततया कीर्त्तिप्रतापयोरेव सकलभुवनतमोनिवर्त्तनकमलकुवलयोल्लसनादिधौरन्धर्यं व्यज्यते ।

यः पुनरनुपपद्यमान एव कस्यचिदुपपन्नार्थस्य प्रतीतिं समर्प्य स्वयं निवर्त्तते सोऽत्यन्ततिरस्कृतवाच्यः ।

यथा—

नञ्जक्षितीन्द्रेण नवैर्विलासै-
रुल्लासिताया न कदाऽपि तस्याः ।
अपि प्रियेणानुपदोपभुक्तं
सौन्दर्यमेव स्फुटमव्य ( प्य ? ) लीकम् ॥

अत्र निष्फलत्वलक्षकालीकपदेन स्वार्थोऽत्यन्ततिरस्कृतः । तेन नञ्जोपभोग एव सर्वासां सौन्दर्यसार्थक्यसंपादक इति व्यज्यते ।

एतौ द्वौ पदगतौ । वाक्यगतावपि द्वौ भवतः । अत एव लक्षणामूलाश्चत्वारो ध्वनयः । तत्र वाक्यगतार्थान्तरसङ्क्रमितो यथा—

पश्येमं पद्मपत्राक्षि दृश्यतेऽयं त्वया पुरः ।
कळलेकुलचन्द्राय यस्मै स्पृहयते मही ॥

इदं काञ्चन राजकन्यकां प्रति सखीवचनम् । अत्र अयं दृश्यत इत्यनन्तरमिमं पश्येति वाक्येन कथितार्थबोधनादनुपयुक्तेनानितरसाधारणमिमं पश्येत्यर्थान्तरसङ्क्रमणादस्मिन्नेव त्वयाऽनुरागः कार्य इति व्यज्यते ।

वाक्यगतात्यन्ततिरस्कृतो यथा—

नतानुकूलः किल नञ्जभूपः
सद्यो दुरुक्तानि च सर्वथाऽपि ।
कथं सहेत प्रतिमल्लभूपाः
प्रयान्ति तत्क्वापि वनस्थलानि ॥

इदं नञ्जराजभयेन विदेशजिगमिषून् विभून् प्रति तदमात्यवचनम् । अत्र प्रणामादिऋजूपाये नञ्जराजे सर्वप्रकारेणापि शात्रवदुरालापासहनशीलत्वरूपार्थस्यानुपपत्त्या विपरीतलक्षणया सहत एवेत्यर्थो व्यज्यते । शक्तिरपि शब्दार्थगता द्विविधा । तत्र शब्दशक्तिः पदवाक्यगतत्वेन द्विविधा । प्रत्येकं वस्त्वलङ्कारयोर्ध्वनौ शब्दशक्तिमूलाश्चत्वारः । अर्थशक्तिरपि स्वतःप्रौढोक्तिसिद्धा प्रत्येकं पदवाक्यगतत्वेन द्वैविध्ये चतुर्विधा । वस्तुना वस्त्वलङ्कारयोरलङ्कारेणालङ्कारवस्तुनोर्ध्वनावेकैकस्य चातुर्विध्येऽर्थशक्तिमूला रसादिध्वनिभिर्वाक्यपदपदैकदेशरचनावर्णगतैः पञ्चभिः सहैकविंशतिः । उभयशक्तिमूल एक इति शुद्धध्वनयस्त्रिंशत् । तत्र वस्त्वलङ्कारध्वनिः संलक्ष्यक्रमव्यङ्ग्यः रसादिध्वनिरसंलक्ष्यक्रमव्यङ्ग्य इति विवेकः ।

तत्र शब्दशक्तिमूलो वस्तुध्वनिः पदे यथा—

अञ्चत्काञ्चीमधिकविलसत्कुन्तलां चारुनीलां
काश्मीरेण द्विगुणरुचिभिर्भूषितां चाङ्गभाभिः ।
प्राप्तुं श्रेयः परममवनीपालधौरेयधत्तां
स्निग्धां श्यामामपि वसुमतीं पाति नञ्जक्षितीन्द्रः ॥

अत्र वसुमतीरक्षणरूपवस्तुनि प्रस्तुते विधिवत्परिणीतायाः कस्याश्चित्स्त्रियः संरक्षणरूपवस्तु व्यज्यते ।

शब्दशक्तिमूलालङ्कारध्वनयो बहुविधाः। तत्र लौकिकवस्तुनिरूपितालङ्कारध्वनिर्यथा—'सर्वतो मुखसिद्धे'त्यादि [१६५]। अत्र बलवत्प्रतिपक्षीयतुरङ्गमदर्शनेन दुर्लभ (बेल?) शात्रवाणां भ्रमणं सर्वलोकसिद्धम्।

तार्किकशास्त्रीयवस्तुनिरूपितालङ्कारध्वनिर्यथा—

अनियतसहचरवृत्तिप्रथितविरोधैकहेतवः कुभृतः।
अन्तःप्रकोपवह्निं व्यक्तं गमयन्ति वीरविभुसूनोः॥

अत्र विरुद्धहेतोरपि—पर्वते वह्निसाधकत्वेन साहचर्यनियमस्य प्रसिद्धत्वेऽपि तं विना वह्न्यनुमितिकथनात् कारणपौष्कल्याभावप्रयुक्तो विभावनालङ्कारः। कुभृत इति पदगतः प्रभुपर्वतौपम्यध्वनिः।

मीमांसकवस्तुनिरूपितालङ्कारध्वनिर्यथा—

कपिञ्जलाधिकरणे वेदत्वान्नञ्जभूपतिः।
बहूक्तिषु च ते यस्माच्चातुर्यं नैव दृश्यते॥

कपिञ्जलाधिकरणे बहुवचनबोधितबहुत्वस्य त्रित्व एव पर्यवसानम्। न चतुष्ट्वादिष्विति मीमांसकानां राद्धान्तः। अत्र लडयोरभेदात् हे जड अधिकरणे महायुद्धे नञ्जभूपतिः त्वां कपिं वानरं मन्यते। अत्यन्तभीतं मन्यत इति यावत्। यस्मात्ते उक्तिषु चातुर्यं बहुधा न दृश्यते।

कथं भुजयोः सम्भवेदिति भावः। अतः समरसन्नाहं सर्वथा मा कृथा इत्याक्षेपालङ्कारः। अत्र चातुर्यमिति पदगतः सामर्थ्यचतुष्टयोरौपम्यध्वनिः। इदं च कृतिनायकविरोधिनः प्रति भेदोपायेन भयजनकैर्नञ्जराजसचिवैः प्रेषितं वचनम्।

ज्योतिःशास्त्रवस्तुनिरूपितो यथा—

कन्याभिजाता तरलैरपाङ्गै-
रियं विलासादधिरूढकर्कम्।
स्वच्छन्दमुच्चैर्धिषणं मुहुस्त्वां
नञ्जेन्द्र निध्याय मुदं विधत्ते॥

अत्र कन्याभिजातेत्यत्र कन्यालग्नसञ्जातेयं स्वलग्नैकादशकर्कटकोल्लसदुच्चधिषणस्य यत्नं विनाऽप्यचिरसमाहितकटकत्वेन स्वाभिलषितनञ्जेन्द्रकरग्र-

१ प्रयुक्तालङ्कारः OL. २ शास्त्रसम्बन्धौ OL.

हृणयत्नं विनाऽपि मे सिध्ये [ दि ] त्याशया मुहुः पश्यन्ती (प्रहृष्यती?) स्यर्थः। अत्र प्रहर्षणालङ्कारो व्यज्यते।

अत्र कर्कमितिपदगतः श्वेताश्वकुलीरयोरपत्य (रौपम्य ?) ध्वनिः।

योगशास्त्रवस्तुनिरूपितो यथा—

समर्प्य योगं स्वमरिक्षितीश-
व्रजेषु वीरेन्द्रतनूजखड्गः।
प्राणानिलं हृत्कमलाच्च तेषा-
मुत्कम्पमभ्यासयति क्षणेन॥

अत्र क्षणेनाभ्यासयतीत्यनेनात्यन्तचतुरयोगीन्द्राभेदः खड्गे गम्यते। अत्र योगमितिपदगतो योगशास्त्रौपम्यध्वनिः।

गान्धर्वनिरूपितो यथा—

दुर्विवादिस्वरारोहविधायी नञ्जभूपतेः।
करवालः पूर्णरागध्रुवाभोगादिकल्पकः॥

अत्र दुष्टविवादिनां रिपूणां स्वर्गारोहणदः, अन्यत्र दुर्विवादिनां दुष्टविरोधिस्वराणामारोहविधायी पूर्णरागाणां नित्यानुरागाणां ध्रुवाभोगो नित्यपरिपूर्तिः तत्कल्पकः। अन्यत्र पूर्णरागाणां ध्रुवागीतस्याभोगादीनाञ्च कल्पकः। तथा च करवालस्य गान्धर्वाभेदो गम्यत इति रूपकालङ्कारः।

शब्दशक्तिमूलवस्तुध्वनिर्वाक्ये यथा—

स्वस्त्रैणसन्नुतगुणव्रज नञ्जराज
स्वाधीनभूपजनतां महिमाश्रयत्वम्।
याऽशेषयत्नविधृताऽपि सुखेन नासी-
देनां श्रियं च नियतं निभृतं वहस्व॥

अत्र स्वाधीनराजसमूहतां महिमाश्रयत्वं याऽशेषयत्नविधृताऽपि सुखं नावर्त्तत तां श्रियं च निश्चलं वहस्वेत्याशंसारूपवस्तुनि प्रस्तुते या शेषयत्नविधृताऽपि सुखेन नासीत् तां महीं निभृतमाश्रयस्वेति भूप्रास्याशंसारूपं वस्तु व्यज्यते।

---

१ स्य OL.

वाक्येऽलङ्कारध्वनिर्यथा—

आकर्णयन्नञ्जविभोरौदार्यममरद्रुमः ।
धत्ते न भोगकुतुकं नितान्तं चलतान्वितः ॥

अत्र नितान्तं चलतान्वित इत्यनेन नितान्तं च लतान्वितश्चेति [ अर्थः ] चलतान्वित इत्यर्थश्च प्रतीयते । न भोगकुतुकं धत्त इत्यनेन [ न ] भोगकुतुकं धत्ते, न भोगकुतुकं धत्त इत्यर्थश्च । तथाच लतान्वितोऽपि तथाविधो भोगकुतुकं न धत्त इत्युत्प्रेक्षालङ्कारो रम्यते । तदेवं शब्दशक्तिमूलकं वस्त्वलङ्कारद्वैविध्यम् । तदुक्तम्—

"अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
प्रधानत्वेन संज्ञेयः शब्दशक्त्युद्भवो द्विधा" ॥ इति ।

अतोऽ(अथा?) र्थशक्तिमूलकाः । तत्र स्वतःसिद्धार्थशक्तिमूलकत्वाच्चत्वारः । स्वतःसिद्धार्थशक्तिमूलकवस्तुध्वनिः, स्वतःसिद्धार्थशक्तिमूलकवस्तुनाऽलङ्कारध्वनिः, स्वतःसिद्धार्थशक्तिमूलकालङ्कारेणालङ्कारध्वनिः, स्वतःसिद्धार्थशक्तिमूलालङ्कारेण वस्तुध्वनिरिति । त एव पदवाक्यगतत्वेन द्विविधाः । तत्र–स्वतःसिद्धार्थशक्तिमूलकवस्तुध्वनिः, पदे यथा—

नञ्जक्षितीन्द्रचकितैश्चलितैः स्वदेशात्
कान्तैर्नृपैस्त्रिचतुराणि पदानि गत्वा ।
कान्ताः कियत्पदमिता सरणिर्विलङ्घ्या
नाथेति नम्रवदनाननुयुञ्जते तान् ॥

अत्र कियत्पदमितिपदेन न कदाऽप्येकघटिकापरिमितसरणिपर्यटनपरिचय इति महाभाग्यं वस्तु व्यज्यते ।

सैव वाक्ये यथा—

कर्णाग्रलोलदुरुमौक्तिकवालिशोभा-
नीराजितानि नवकन्दलितस्मितानि ।
विस्रंसिनीविनह्नानि विलासिनीनां
नञ्जक्षितीन्द्रमुखलोलविलोकनानि ॥

अत्र चेष्टारूपवस्तुना नञ्जविभुसौन्दर्यातिशयरूपं वस्तु व्यज्यते ।

स्वतःसिद्धार्थशक्तिमूलकवस्तुनाऽलङ्कारध्वनिः पदे यथा—

अवनिपतिभिर्नञ्जक्षोणीमहेन्द्रदिदृक्षुभि-
नगरसविधे सङ्गीभूतैः सहैव समागतान् ।
द्विरदनिवहान् दृष्ट्वा धातुद्रवैरभिरञ्जितान्
विपिनशिखिनो नित्यं नृत्यन्त्युदञ्चितचन्द्रकाः ॥

नित्यं नृत्यन्तीतिपदेन वर्षासमयं विनाऽपि सार्वकालं सेन्द्रचापजलदभ्रान्तिरिति भ्रान्तिमदलङ्कारो व्यज्यते ।

सैव वाक्ये यथा—

नञ्जेन्द्र भवतः सौम्यवंशे[1] जाता धनुर्लता ।
इयं न सहते राजमण्डलस्योर्ध्वतः स्थितिम् ॥

अत्र विरोधाभासालङ्कारो व्यज्यते ।

स्वतःसिद्धार्थशक्तिमूलालङ्कारेणालङ्कारध्वनिः पदे यथा—

स्निग्धामुन्मुक्तशोभामकतरममतावलोकप्रसङ्गात् (?)
कान्तिप्राग्भारचञ्चन्नख(व?)मणिविलसन्मेखलालङ्कृताङ्गीम् ।
उद्दामोद्यन्नितम्बामवधिगिरिशिलाश्च(च ?)क्रवाल्याश्चसीमा-
मुल्लास्यातीव रक्तो विलसति तरुणो नञ्जराजप्रतापः ॥

अत्र समासोक्त्यलङ्कारे स्निग्धोद्यन्नितम्बारक्ततरुणपदैरुभयानुरूप्यप्रतीतेः समासालङ्कारो व्यज्यते ।

स एव वाक्ये यथा—

भूपेन्द्रनञ्जक्षितिपाल एव नित्यं निषेव्यः सकलैः सुधीभिः ।
वृक्षेषु कल्पद्रुम एव देवैरासादनीयः सततं समेतैः ॥

अत्र प्रतिवस्तूपमालङ्कारेणौपम्यं व्यज्यते ।

स्वतःसिद्धार्थशक्तिमूलालङ्कारेण वस्तुध्वनिः पदे यथा—

नञ्जक्षितीन्द्रस्य जयध्वजाग्रराजत्कपीन्द्रश्रुतिमात्र एव ।
अनेकधा वैरिमहीपतीनां भवन्ति निश्वाससमीरधाराः ॥

अत्र हनुमद्ध्वजश्रवणमात्रादेव रिपुराजदैन्यपिशुननिश्वासपरम्पराजननकथनादत्यन्तातिशयोक्त्यलङ्कारः । अत्र श्रुतिमात्र इत्यनेन साक्षाद्दर्शनं चेत्कथं भवति वा न ज्ञायत इति वस्तु व्यज्यते ।

---

1 वंश CL.

स एव वाक्ये यथा—

नञ्जक्षितीन्द्रस्य कृपाणधारा कलिन्दकन्येव कठोरवेगा ।
परं तु दृप्यद्बलभद्रबाहाविजृम्भवृत्तैरसहिष्णुरास्ते ॥

अत्र व्यतिरेकालङ्कारेण कृपाणधाराया यमुनापेक्षयोत्कर्षो व्यज्यते ।

अथ कविप्रौढोक्तिसिद्धार्थशक्तिमूलकाः । तेच प्रागुक्तरीत्या चतुर्विधाः । पदवाक्यगतत्वेन द्विविधाः कविप्रौढोक्तिसिद्धार्थशक्तिमूलकवस्तुध्वनिः पदे यथा—

स्वाङ्कं समारोप्य यथा (या ?) चिराय
संरक्षिताः सर्वलनाश्च तत्र ( धात्र्या ? ) ।
नञ्जप्रभोर्दोरिति वल्लिरेखा (षा ? )
तामेव धात्रीमुचितं बिभर्त्ति ॥

अत्र निर्विशेषपोषितास्वपि प्रजासु महापुरुषाश्रयिण्या एव स्वरक्षकधात्रीभरणं युक्तमिति लोकसिद्धं वस्तूचितमिति पदेन व्यज्यते ।

स एव वाक्ये यथा—

असिप्रवीणस्तुतमुष्टिबन्धो धनुष्मदिच्छानुगुणप्रकोष्ठः ।
कठोरवक्षोजवधूभिरर्थ्यं वक्षो वहन् राजति नञ्जभूपः ॥

अत्र मुष्टिबन्धप्रकोष्ठवक्षःस्थलेषु स्थैर्यं नाम सामुद्रिकलक्षणोक्तराजचिह्नं वस्तु व्यज्यते । 'वक्षश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिरा' । इति सामुद्रिकशास्त्रोक्तिः ।

कविप्रौढोक्तिसिद्धार्थशक्तिमूलवस्तुनाऽलङ्कारध्वनिः पदे यथा—

द्रष्टुं नञ्जविभुं समुत्सुकतया विस्मृत्य धर्तुं गले
हारं राजपथे च रज्य(न्त्य ?)तिजवादात्मानमालोक्य च ।
कस्याश्चिल्ललितस्मिताश्चितदृशो हासप्रभालङ्कृत-
प्रोत्तुङ्गस्वकुचाग्रदत्तनयना काचिन्मुदं विन्दति ॥

मुदं विन्दतीत्यनेन समीपगतायाः कस्याश्चित् प्रौढस्त्रियो हासकान्त्या यत्नं विनैव स्वीयोत्तुङ्गकुचमण्डलधार्यमुक्ताहारलाभप्रतीतेः प्रहर्षणालङ्कारो व्यज्यते ।

स एव वाक्ये यथा—

नञ्जविभुकीर्तिरुचयः कुमुदेष्वपि धवलकमलषण्डेषु ।
सञ्चार्य सपदि कुतुकात् क्रीडन्ति हि कलशजलधिमभितोऽपि ॥

मीलनालङ्कारो व्यज्यते।

कविप्रौढोक्तिसिद्धार्थशक्तिमूलालङ्कारेणालङ्कारध्वनिः पदे यथा—

त्वत्कीर्त्तिं नञ्जराज क्षितितिलक भुवः सर्वतो जृम्भमाणां
जानाना नीरजाक्ष्यस्त्रिभुवनमभितः स्वःस्रवन्तीं स्रवन्तीम्।
मुग्धाः पुञ्जीभवन्त्यः कटितटविलसच्चारुसौवर्णकुम्भं
नीवीसंरुद्धचेलाञ्चलमतिमुदिता मङ्क्तुकामा वलन्ते॥

अत्र जानाना इति पदेन भ्रान्तिमदलङ्कारेण कीर्त्तेर्गङ्गायाश्चौपम्यं व्यज्यते।

स एव वाक्ये यथा—

'जेतुर्नञ्जमहीपतेस्त्रिजग'दित्यादि [१९५]। अत्र स्मृत्यलङ्कारेणौपम्यं व्यज्यते।

कविप्रौढोक्तिसिद्धार्थशक्तिमूलालङ्कारेण वस्तुध्वनिः पदे यथा—

सङ्ग्रामोद्यतनञ्जभूपतिचमूरेणूत्कराच्छादिते-
ष्वभ्यर्णभ्रमदिन्दुनिर्यदमृतोत्सिक्तेष्वरिक्ष्माभृताम्।
सौधाग्रेष्वभितः प्ररूढहरितेष्वागत्य नक्तंदिवं
नर्दत्यद्य कपर्दिनः स्फुटतरक्षीबो महोक्षो मुहुः॥

अत्र पर्यायोक्त्यलङ्कारे नक्तन्दिवमितिपदेन शत्रुभूभृतामतिचिरेण प्रवृत्तत्वं प्रवासे व्यज्यते।

स एव वाक्ये यथा—

नञ्जविभुकीर्त्तिजलधेः कतिपयलेशेषु[1] मतिरेवम्।
दुग्धाम्बुधिरिति दिविषत्तटिनीति शरत्सुधांशुरिति॥

अत्रोल्लेखालङ्कारेण मूलभूतकीर्तेः क्षीरसमुद्रादिभ्योऽप्याधिक्यं व्यज्यते।

## उभयशक्तिमूलको यथा—

सामुद्रिकगुणोदारः समस्तभुवनश्रियम्।
पुष्णन्नञ्जविभुर्विष्णुं निद्राणं तनुते सुखम्॥

अत्र सारस्वतगुणोदार इति वा पाठः। अत्र सुखं विष्णुं निद्राणं तनुत इत्यर्थशक्तिमूलकः। नञ्जराजसुधासागरयोरौपम्यध्वनिः। ननु कविनिबन्धनवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलाः प्रबन्धगताः किमिति न परिगणिता इति। मैवम्। कविप्रौढोक्तिष्वेवान्तर्भावात्। अन्यथा कविनिबन्धवक्तृनिबन्धकवि-

---

१ देशे OL.

प्रौढोक्त्योऽपि किमिति न सिध्येयुः। एवं प्रबन्धाधिगतत्वेन यथासम्भवमुदाहरणानि द्रष्टव्यानि। विस्तरभयादिह नोक्तानि इति संलक्ष्यक्रमव्यङ्ग्यनिरूपणम्।

अथासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। तदुक्तं काव्यप्रकाशे—

"रसभावतदाभासभावशान्त्यादिरक्रमः।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः" ॥ इति।

असंलक्ष्यक्रमव्यङ्ग्यमग्रे वक्ष्यते। गुणीभूतक्रमव्यङ्ग्यं मध्यमं काव्यं निरूप्यते। वाच्याद्रम्यतया शब्दैः संगृह्य विवक्षितस्यैव व्यङ्ग्यस्य प्राधान्यं ध्वनिः। तदितरत्वं व्यङ्ग्यस्य गुणीभावः। स च सप्तधा†। अपराङ्गत्वेन, अगूढत्वेन, स्फुटत्वेन, वाच्यव्यङ्ग्ययोः प्राधान्यसन्देहेन, तौल्येन, वा (काका ?) स्वरगतत्वेन, असुन्दरत्वेन। तदुक्तम्।

"अगूढमपरस्याङ्गं वाच्यसिध्यङ्गमस्फुटम्।
सन्दिग्धतुल्यप्राधान्ये काकाक्षिप्तमसुन्दरम्" ॥
'गूढमेव चमत्कारि कर्णाटीकुचकुम्भवत्'।
अगूढव्यङ्ग्येऽपि मध्यमं काव्यम्।

तत्रार्थान्तरसङ्क्रमितवाच्यमगूढं यथा—

भवत्वजस्रं गगनं स चन्द्रो धनुश्च सज्जं मदनो दधातु।
सदा वसन्तो वलतामिदानीं योषाऽस्मि नञ्जेन्द्रकरग्रहेण ॥

अत्र योषाशब्दश्चन्द्राद्युत्सवाचरणादियोषाधर्मविशिष्टयोषालक्षकः। तेनैतावत्पर्यन्तमितिकर्त्तव्यताजडत्वमङ्गीकृतमिति सूचितं वस्त्वगूढम्। अस्य लोकपरम्पराप्राप्तेरगूढता।

अत्यन्ततिरस्कृतमगूढं यथा—

लज्जां जहीहि ललने वलनेन चाक्ष्णो-
रूरीकुरुष्व सहसा सखि नञ्जभूपम्।
कोकी मुदञ्च समुदञ्चयति स्वनेन
प्राचीं दिशं प्रणयतः परिरम्भतेऽर्कः ॥

---

† अत्रेदं प्रतिभाति—'सच सप्तधे'ति विभागवचनम्, तदनुगुणश्च विभाजकधर्मोपन्यासः 'अगूढत्वेने'त्यादिः, किन्तु विभागे प्रमाणतयोपात्त'अगूढ'मित्यादि काव्यप्रकाशवचनं वाच्य सिद्धयङ्गस्याधिकस्य परिगणनेनाष्टधा विभागमभिप्रैति, अगूढादीनामुदाहरणनिरूपणसमये तु स्वयं 'वाच्यसिद्धावङ्गं यथे'त्येतदप्युदाह्रियते, तदष्टधा विभाग उपरिष्टादुदाहृतो भवति, तत् सप्तधेति स्थाने अष्टधेति अपराङ्गत्वेनेत्यस्यानन्तरं वाच्यसिद्धयङ्गत्वेनेति च पाठश्चेदौचित्यममत्रेति।

इदं कृतिनायकस्य नवोढां नायिकां प्रति सखीवचनम् । अत्र परिरम्भते इति पदस्य स्वार्थतिरस्कारेण प्राग्भावसम्बन्धलक्षण(क?) त्वं तेन च प्राचीसूर्ययोर्नायिकानायकभावो व्यङ्ग्यः कविप्रयोगपरम्परागतत्वाद्गूढः ।

शब्दशक्तिमूलकमगूढं यथा—

नञ्जराजाह्वयो धन्वी युवाऽयं नलिनाम्बकः ।
रतिप्रियंकरः कोऽपि रञ्जयत्यखिला वधूः ॥

अत्र कृतिनायकस्य मन्मथौपम्यं व्यङ्ग्यमगूढम् । नलिनाम्बकरतिप्रियंकरादिपदानां कविप्रयोगबाहुल्यात् ।

अर्थशक्तिमूलमगूढं यथा—

येनासन्प्रतिपक्षभूमिपतयो विध्वस्तगर्वोदया
लीनः क्वापि च येन दीनजनतादारिद्र्यमुद्राभरः ।
विश्रान्ता भुज एव यस्य वसुधा सर्वा स्वयं शैशवे
तादृक्षं भुवि नञ्जभूपतिलकं कः स्तोतुमस्तोकधीः ॥

अत्र शैशवे शात्रवविजयादिगुणाश्चेत्तारुण्यादिषु किमु वक्तव्यमित्यर्थापत्तिरगूढा व्यज्यते ।

अपराङ्गमपि द्विविधम्—व्यङ्ग्याङ्गं वाच्याङ्गं चेति । तत्राद्यं यथा—

नञ्जक्षितीन्द्रभटहस्तलसत्कृपाण-
धारा विलोलमनसामवनीपतीनाम् ।
संस्तम्भयन्ति हृदयानि विवर्णयन्ति
गात्राणि नेत्रयुगलीमपि घूर्णयन्ति ॥

अत्र भयानकस्य शृङ्गाररसोऽङ्गम् । वाच्याङ्गमपि शब्दशक्तिमूलमर्थशक्तिमूलश्चेति द्विविधम् । तत्राद्यं

यथा—

फलानि स्वस्थेभ्यः परमभिमतानि प्रतिकलं
ददानान्मन्दारद्रुमसुरभिचिन्तामणिमुखान् ।
मुहुर्यः कु(न्यंक्कु ?)र्वन्तः कृपणबहुविश्राणनचणं
कवीन्द्राः श्लाघन्ते भुवनतिलकं नञ्जनृपतिम् ॥

स्वस्थेभ्यः ददानानित्यनेन दीनेषु विश्राणनं नास्तीति व्यङ्ग्यं कविकर्तृक-[न्यक्काररूप]वाच्यस्याङ्गम् ।

---

१ लक्ष्यत्वं OL. २ गतादर्था OL.

अर्थशक्तिमूलं यथा—

शम्भुं क्ष्वेलगलं सुधाजलनिधिं शैवालजालाकुलं
चन्द्रं चाङ्कलसत्कुरङ्गमभितो गङ्गां सनीलोत्पलाम् ।
त्यक्त्वा सम्प्रति सर्वतोऽपि धवलां नञ्जक्षमावल्लभ
त्वत्कीर्तिं नियतं भजन्ति निखिला नैर्मल्यलक्ष्मीगुणाः ॥

अत्र क्ष्वेलगलादिविशेषणपदैर्व्यज्यमानं मालिन्यं नैर्मल्यलक्ष्मीगुणानां-चन्द्रादिपरित्यागरूपवाच्यस्याङ्गम् ।

वाच्यसिद्धावङ्गं यथा—

स्थैर्यं ममास्त्विवति महीमभितोऽपि पादै-
राक्रामतु प्रविशतु प्रथमं पयोधिम् ।
श्रीरस्तु मत्प्रणयिनीति रिपुस्त्वदीयो
भो नञ्जभूप भवतस्तु वशंवदे ते ॥

अत्र स्थैर्यश्रियौ भवत एव । नान्यस्य सम्भवत इत्यर्थः । अत्र पर्वतत्वं विष्णुत्वं च व्यङ्ग्यम् । स्थिरभावप्राप्तिरूपवाच्यस्य सिद्धौ श्रीप्रणयप्राप्तिरूप-वाच्यस्य सिद्धौ यथाक्रममङ्गम् ।

अस्फुटं यथा—

श्रीनञ्जराजक्षितिपालमौले-
र्जानाति गाम्भीर्यमयं पयोधिः ।
स्थितिं च सर्वां महतो (सो ?) विवस्वान्
सौन्दर्यसारं स च पुष्पधन्वा ॥

अत्र समुद्रसदृशं गाम्भीर्यं तपनसदृशः प्रतापो मन्मथसदृशं सौन्दर्य-मित्यलङ्कारस्य कविसंरम्भगोचरत्वेनास्फुटत्वम् ।

सन्दिग्धप्राधान्यं यथा—

उन्मीलत्पुलकं विलोलचिकुरं स्विद्यत्कपोलस्थलं
पार्श्वस्रस्तललन्तिकं परिवहत्प्रेमप्रसन्नेक्षणम् ।
हस्तेनाननमुन्नमय्य सुतनोः कस्याश्चिदालोकते
स्वामी नञ्जमहीपतिर्मकरिकानिर्माणचातुर्यवान् ॥

अत्र तात्पर्यविश्रान्तिर्वाच्ये मकरिकानिर्माण एव व्यङ्ग्येऽधररसास्वादने वा पर्यवस्यतीति वाच्यव्यङ्ग्ययोः प्राधान्यसन्देहः ।

समप्राधान्यं यथा—

हसावनीपानवमानयन्तो
नञ्जक्षितीन्द्रस्य भुजप्रतापाः।
मायन्ति चेत् केचन मन्दभाग्या-
स्तदा स्वलीलां तरसा वहेयुः॥

अत्र हसावमाननं कुर्युरिति व्यङ्ग्य (म्) विशेषण (तया) वाच्यार्थस्य हसावमाननस्यैव व्यञ्जनया बोधनात्। वाच्यव्यङ्ग्ययोः समप्राधान्यम्।

काक्वाऽऽक्षिप्तं यथा—

प्रख्यातोऽस्तु सखि स्फुटं वसुमति (ती ?) प्रेयानिति प्रायशः
त्वत्तोऽन्यां बहुमन्यते कृतविदां मान्यः स नञ्जप्रभुः।
आसीत्त्वत्कुचकुम्भकावभिमृशन्मुग्धे विमोहाम्बुधे-
रुत्तीर्णो विषमेषुनिष्ठुरशरावर्तेषु लग्नोऽपि यः॥

अत्र बहुमन्यत इत्यनेन पदेन काक्वा न बहुमन्यत एवेति व्यङ्ग्यम्।

असुन्दरं यथा—

सेना(वा ?)नन्दित नञ्जभूप भवतः साक्षात् स्वहस्तार्पितै-
र्वस्त्रैरद्भुतभूषणैश्च नितरामाभूषिताः स्वां पुरीम्।
भूयो भूपतयः प्रपद्य सचिवैः साकं सभामास्थिताः
सभ्यांस्त्वत्सदृशः कथाभिरधिकं विस्मेरयन्त्यन्वहम्॥

अत्र साक्षात्स्वहस्तार्पितैरित्यनेन भूपेषु नञ्जराजप्रीत्यतिशयसम्पादनं व्यज्यते। तस्य चान्यराजसेवागतत्वेन राज्ञामनुत्कर्षरूपत्वाद्वाच्यापेक्षयाऽचारुत्वम्।

इति गुणीभूतव्यङ्ग्यनिरूपणम्।

चित्रं तु शब्दार्थालङ्कारचित्रतया बहुविधम्। तत्प्रपञ्चोऽप्यलङ्कारप्रकरणे भविष्यति। अथ महाकाव्यादयः प्रबन्धा निरूप्यन्ते।

"नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्।
उद्यानसलिलक्रीडामधुपानरतोत्सवाः॥
विप्रलम्भो विवाहश्च कुमारोदयवर्णनम्।
मन्त्रद्यूतप्रयाणादिनायकाभ्युदया अपि॥
एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमिष्यते।"
एतेषामष्टादशानां मध्ये यैः कैश्चिन्न्यूनमपीष्यते।

तत्त्रिविधम्—गद्यमयं पद्यमयमुभयमयं चेति ।

'अपादः पदसङ्घातो गद्यं पद्यं चतुष्पदी' ।

गद्यं काव्यं कादम्बर्यादि । पद्यं काव्यं रघुवंशादि ।

"असर्गबन्धमपि तदुपकाव्यमितीर्यते ।"

असर्गबन्धं सूर्यशतकादि ।

"गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।
वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् ॥
वर्ण्यते यत्र काव्यज्ञैरसावाख्यायिका मता ॥"

यत्र वक्त्रापरवक्त्रनामानौ वृत्तविशेषौ वर्ण्येते सोच्छ्वासपरिच्छिन्नाऽऽख्यायिका हर्षचरितादि ।

अथ क्षुद्राः प्रबन्धा निरूप्यन्ते ।

'युक्तं केनापि तालेन गद्यपद्यसमन्वितम् ।
जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ॥
संबोधनविभक्त्या यत्प्रचुरं पद्यपूर्वकम् ।
विमुक्तपुनराकृष्टशब्दं स्याच्चक्रवालकम् ॥
आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥
प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ।
सर्वतो देवशब्दादिरेषा भोगावली मता ॥
वर्ण्यमानाङ्कबिरुदवर्णनप्रचुरोज्ज्वला ।
वाक्याडम्बरसंयुक्ता सा मता बिरुदावली ॥
ताराणां सङ्ख्यया पद्यैर्युक्ता तारावली मता ।'

एवं कविप्रौढोक्तिसिद्धाः क्षुद्राः प्रबन्धाः यथासम्भवमूह्याः । तेषामुदाहरणानि विस्तरभयादिह नोक्तानि ।

इति श्रीपरमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादित-
निःसहायदैनन्दिनप्रबन्धनिर्माणसाहसिकनिखिलविद्वज्जनलालनीयसर-
ससाहितीसम्प्रदायप्रवर्तकनरसिंहकविविरचिते नञ्जराज-
यशोभूषणे अलङ्कारशास्त्रे ध्वनिनिरूपणं
नाम तृतीयो विलासः ॥

# अथ चतुर्थो विलासः

करुणारसकल्लोलललितापाङ्गवीक्षणम् ।
कन्दर्पजनकं धाम कल्याणानि करोतु नः ॥

अथ संलक्ष्यक्रमव्यङ्ग्यरसस्य स्वरूपं निरूप्यते ।

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥'

भावस्य स्थायित्वं नाम सजातीयविजातीयानभिभूततया यावदनुभवमवस्थानम् ।

तदुक्तं दशरूपके—

'सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान् ।
यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः ॥'

अथ रसविशेषाः ।

'शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ॥'

एषां स्थायीभावाः ।

'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्त्तिताः ॥'

अथ विभावः ।

'विभावः कथ्यते तत्र रसोत्पादनकारणम् ।
आलम्बनोद्दीपनात्मा स द्विधा परिकीर्त्तितः ॥'

रससमवायिकारणमालम्बनविभावः । इतरत्कारणमुद्दीपनविभावः । स चतुर्विधः । तदुक्तं शृङ्गारतिलके—

'आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः ।
तटस्थाश्चेति विज्ञेयाश्चतुर्थोद्दीपनक्रमाः ॥
आलम्बनगुणो रूपयौवनादिरुदाहृतः ।
तच्चेष्टा यौवनोद्भूतहावभावादिका मताः ॥
नूपुराङ्गदहारादि तदलङ्करणं मतम् ।
मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्त्तिताः ॥'

अथानुभावः ।

'कार्यभूतोऽनुभावः स्यात्कटाक्षादिः शरीरजः ।'

परगतसुखदुःखानुभावनया भावितान्तःकरणत्वं सत्त्वम् ।

ततो भवाः सात्त्विकाः ।

'स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥'

अथ व्यभिचारिभावाः ।

'निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥
सुप्तिर्विबोधोऽमर्षश्चाप्यवहित्था मदोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावा रसस्य सहकारिणः ॥'

तथा चोक्तं काव्यप्रकाशे—

'कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावाश्चानुभावाश्च कथ्यन्ते व्यभिचारिणः ।' इति ।

लोके कार्यकारणसहकारिशब्दवाच्या नायिकानायककटाक्षभुजाक्षेपनिर्वेदादयः, काव्यनाट्ययोस्तु विभावानुभावव्यभिचारिशब्दव्यपदेश्या भवन्ति । शृङ्गारवीररौद्राद्भुतानां लोकोत्तरनायकाश्रयत्वेन परिपोषातिशयः । अत एव शृङ्गारस्य म्लेच्छादिविषयत्वेनाभासत्त्वम् । तथा चोक्तम्—

'एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥' इति ।

व्यभिचारिभावानामुदयेन प्रशाम्यदवस्थया परस्परविरुद्धरसाश्रितयोर्भावयोः स्पर्द्धया सम्बन्धेनान्योन्योपमर्दकतया बहूनां समावेशेन च चातुर्विध्यम् । तथा चोक्तं दशरूपके—

'भावस्य शान्तिरुदयः सन्धिः शबलता तथे'ति ।

व्यभिचारिभावानामुदयो यथा—

आहूता दयितेन नञ्जविभुना सभ्रूविलासस्मितं
सानन्दं कतिचित्पदान्यभिमुखं यान्ती शनैरन्तिकम् ।
दृष्टां प्राक्करले तनुप्रतिकृतिं पुंभावकेलीविधौ
स्मृत्वा स्वैरविनम्रवक्त्रकमला तन्वी क्षणं लज्जते ॥

अत्र लज्जाया उदयः ।

भावोपशमो यथा—

स्वच्छन्दं किरतु द्रुतं सितरुचिः स्निग्धां मयूखच्छटा-
मुद्दृप्तोऽपि बिभर्तु नाम मदनः सज्जं धनुः सर्वदा ।
स्वैरं केचन सञ्चरन्तु मरुतः सौरभ्यसारस्पृशो
नेता नञ्जनृपस्तवेति गदिता हृष्टा तदाऽऽसीद्वधूः ॥

अत्र भयस्योपशमः ।

भावशबलता यथा—

चन्द्रोऽयं समुदेति चन्द्रवदनः कस्मादितो नागतो
नञ्जेन्द्रः किमनेन यं वसुमती स्वैरं विधत्ते वशम् ।
तस्यैवाधरमाधुरी ननु कथं नाभ्यर्थनीया मया
धिक्चापल्यमिदं प्रियं त्वरयितुं किं प्रेषयिष्ये सखीम् ॥

अत्रामर्षौत्सुक्ययोर्विरुद्धयोरन्योन्योपमर्दफलत्वाच्छबलता

भावसन्धिर्यथा

शरौघैः सङ्ग्रामे भुवनजयिनो नञ्जनृपतेः
परिक्षुब्धे सैन्ये भवति च रिपूणां बलवताम् ।
भटानामानन्दप्रभवजनितैरट्टहसितै-
र्भयोद्भेदः शोको युगपदुदभूद्वैरिसुदृशाम् ॥

अत्र भयशोकादीनां समावेशात् [ सन्धिः ]

अत्र ( पुनः ? ) भावसन्धिर्यथा—

सौधाग्रखेलदवरोधकटाक्षपातै-
र्निस्सीममागधकृतैश्च भुजापदानैः ।
आस्थानवेदिमधिरोहति नञ्जभूपे

1 बधानैः OL.

स्वैरं वपुः पुलकितं युगपत्तदाऽऽसीत् ॥

अत्र वीरशृङ्गारजनितयोर्हर्षयोस्सन्धिः

अथ यथाक्रमं स्थायिभावानां स्वरूपमुदाहरणं च कथ्यते ।

तत्र सम्भोगविषयकेच्छाविषयो रतिः

शृङ्गारस्य रसस्य जीवितरसः सारस्यविज्ञानभूः
भावानां विपणिर्विलाससदनं शिक्षागुरुर्नर्मणाम् ।
कान्तेः केलिपदं कलाभिरभितः सम्भावनीयः सदा
स्वामी नञ्जनृपः प्रियो मम भवेद्भाग्यं किमस्मात्परम् ॥

विकृतदर्शनादिजन्यो मनोविकारो हासः यथा—

नञ्जक्ष्मापवरूथिनीपरिवृढप्रोद्भूतभीमध्वनद्भेरीभा-
ङ्कृतितर्जिता निशि रणे खाना ( योधा ? ) जवाद्वाजिनः ।
आरुह्यादु(ति ?)दरेण मूढमनसः पुच्छाग्रजाग्रन्मुखाः
खड्गैरश्लथवर्मभिः सरभसं छिन्दन्ति तद्ग्रीविकाः ॥

इष्टजनवियोगादिनाऽऽत्मनि दुःखोद्भवः शोकः यथा—

नञ्जक्षितीन्द्रकरसम्भृतखड्गवह्नि-
ज्वालावलीढवपुषामरिभूपतीनाम् ।
कान्ताः पदाग्रविलुठद्घनकेशबन्धा
वक्षस्थलीः करतलैरभिताडयन्ति ॥

परकृतापराधेन मनःप्रज्वलनं क्रोधः यथा—

शैलाभ्यन्तरकन्दरेष्वनुमतामुल्लङ्घ्य वृत्तिं निजा-
मुद्ग्रीवोन्नमिताननान्प्रतिदिशं सोत्कण्ठमुत्पश्यतः ।
जानानाः प्रतिपार्थिवांस्त्यपुटितभ्रूभङ्गभीमेक्षणा
नञ्जक्ष्मापभटाः सहुङ्कृतिरवं क्रुध्यन्ति युद्धोन्मुखाः ॥

लोकोत्तरेषु कार्येषु स्थेयान्प्रयत्न उत्साहः, यथा—

बध्नीमः शरसेतुभिः प्रतितटं सर्वां च सप्तार्णवी-
मुद्दसस्फुटिताट्टहासनिनदैरापूरयामो दिशः ।
चन्द्रार्कावपि निर्विशेषमहसा संस्तम्भयामः क्षणा-
देवं नञ्जविभेर्भवन्ति परितः सैन्येषु वादा मिथः ॥

रौद्रदर्शनादिभिरनर्थाशङ्कनं भयम् यथा—

श्रीनञ्जक्ष्मापमौलेर्भुवनविजयिनः स्वैरदिग्जैत्रयात्रा-
प्रारम्भोज्जृम्भमाणध्वजपटजनितस्फारझञ्झासमीरैः ।
प्रोक्षिप्ताः क्षुद्रभूपाः क्षितिधरकुहराभ्यन्तराण्यभ्युपेताः
स्फायद्रूजा(र्जा ?)प्रजाग्रत्कतिपयपवनात्तत्र बिभ्यत्यवेलम् ॥

अर्थानां दोषसंदर्शनादिभिः गर्हणा जुगुप्सा, यथा—

निर्भिण्णस्कन्दमन्दप्रवहदुरुवसास्वादमाद्यत्पिशाच-
स्पर्धालुप्रेतभूतप्रकटकिलिकिलाध्वानधावत्सृगालम् ।
कङ्कालग्रासपुञ्जीभवदमितबलोद्दसवेतालसङ्घं
रङ्गं सङ्ग्रामभूमेर्विवशयति सुरान्वीरनञ्जक्षितीन्दोः ॥

अपूर्ववस्तुसन्दर्शनात् चित्तविस्तारो विस्मयः, यथा—

किं वाऽसौ मदनस्सचेदिह( हृदि ? ) वसेदत्रापि पौष्पं धनुः
किं वा पूर्णशशी सचेत्कथमसौ सञ्चारलीला भुवि ।
अन्येषामियमीदृशी क्वनु भवेल्लावण्यलक्ष्मीरिति
स्वैरं नञ्जनृपं विलोलमनसः पश्यन्ति वामभ्रुवः ॥

शमो वैराग्यादिना निर्विकारचित्तत्त्वम्, यथा—

जेतुर्नञ्जनृपालमण्डनमणेरत्युद्धतैः सैनिकैः
सङ्ग्रामेषु विपक्षभूमिपतयो विद्राविता निर्भयम् ।
स्थातुं शैलवनस्थलीष्वपि मरुद्भृत्या मनागक्षमा
हित्वा वैषयिकीं कथामपि तपस्थेमानमाबिभ्रति ॥

अथ शृङ्गारस्यालम्बनविभावो यथा—

शरज्ज्योत्स्नासारैः सुरभिलमधूलीपरिचितैः
प्रतीकैः साकारैः सरसिजभुवाऽसौ विरचिता ।
जयत्येषा योषा जनितजगदानन्दलहरी
प्रियश्चास्याः सोऽयं नवसुमशरो नञ्जनृपतिः ॥

उद्दीपनविभावो यथा—

नवं राकाचन्द्रं परिहसति मुग्धं मुखमिदं
विलासश्चाप्यक्ष्णोः विकलयति लक्ष्मीं जलरुहाम् ।

कुचावप्येतस्याः करिकलभकुम्भौ लघयत-
स्तदेतत्पुण्यानां किमपि हि फलं नञ्जनृपतेः ॥

अनुभावो यथा—

सलज्जं सौत्सुक्यं प्रणयमधुरं प्रेमललितं
सवैलक्ष्योदारं स्मितविकसिताकेकरमपि ।
सहर्षं पश्यन्ती स्मरमिव नवं नञ्जनृपतिं
रतेर्लीलालक्ष्मीं भजति सुमुखी कामपि नवाम् ॥

अथ सात्त्विकभावानां स्वरूपमुदाहरणं च—

' स्तम्भः स्यान्निष्क्रियाङ्गत्वं रागभीत्यादिसम्भवम् '

यथा—

जेतुर्नञ्जमहीजानेः श्रुत्वा भेरीरवं रणे ।
भवन्ति प्रतिभूपालाः पर्वता इव निश्चलाः ॥

' प्रलयः† सुखदुःखादेर्गाढमिन्द्रियमूर्च्छनम् ।'

यथा—

निर्मर्यादविलासवैभवरसस्यन्दैर्नवैर्विभ्रमै-
राकारेण च कोमलेन जगतामानन्दसन्दायिनम् ।
दृष्ट्वा नञ्जनरेन्द्रमिन्दुशिशिरं साहित्यसारस्पृशां
स्वैरं मूर्छति विस्मयेन सुदृशां सर्वेन्द्रियाणां ततिः ॥

' वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिजः ।'

यथा—

नृत्यद्वारविलासिनीपदयुगप्राञ्चन्मणीनूपुर-
व्यामिश्रध्वनिभिर्मनोभवधनुष्टङ्कारशङ्कावहैः ।
आस्थानीं समुपेयुषां रसविदां श्रीनञ्जराजप्रभोः
स्वेदाम्भःकणिकाः परं विदधिरे गात्राणि सर्वाण्यपि ॥

'विषादमदरोषादेर्वर्णान्यत्वं विवर्णता ।'

यथा—

आकर्ण्य नञ्जभूभर्तुर्हरिदन्तजयोत्सवम् ।

---

† अत्र क्रमप्राप्तो रोमाञ्चो नोदाहृतः.

आसन्नरिनृपास्तैलशरावमलिनानना: ॥

'रागद्वेषभयादिभ्यः कम्पो गात्रस्य वेपथुः ।'

यथा—

प्रमृज्य चिकुरस्थलीं समधिरोप्य चाङ्कं निजं
कथञ्चिदपि कञ्चुलीमपि विमोचयित्वा शनैः ।
करेण कुचकुड्मले स्पृशति नञ्जभूवल्लभे
सकम्पमलिकुन्तला विवलिताक्षमुद्वीक्षते ॥

'अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ।'

यथा—

आलोकिता कललनञ्जनृपालमौले-
राविष्कृतप्रणयपल्लवितैरपाङ्गैः ।
जाता विनिर्भरसुखाश्रुकणावकीर्णा
प्रेमोर्मिभिः प्रसृमरैर्बहिरावृतेव ॥

मतं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ।

यथा—

निरुपधिरसभाजा नञ्जराजेन काचि-
द्विघटितदृढनीवीसम्पुटन्यस्तहस्ता ।
प्रणमति विनताङ्गी सत्रपं तत्पदाब्जं
किमपि किमपि सामिस्पष्टमाभाषमाणा ।

अथ व्यभिचारिभावानां स्वरूपमुदाहरणं च

'दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः ।'
तत्र चिन्ताश्रुनिश्वासदीनताः सम्भवन्ति च ॥

यथा—

आस्तां कुङ्कुमरागैरतिशिशिरैरालि चन्दनालेपैः ।
आनय नञ्जनरेन्द्रं भूयः प्रेम्णाऽतिशीतलस्वान्तम् ॥

'ग्लानिर्बलस्यापचयो वैवर्ण्यं रतिकारणम् ।

यथा—

बिभर्ति वसुधां कृत्स्नां लीलया नञ्जभूपतिः ।
वहन्ती च कुचाग्रे तं क्लान्ताऽसि ललिताङ्गि किम् ॥

'अनिष्टाभ्यागमापेक्षा शङ्का रोषादिकारणम्।'

यथा—

अयि मनसि ममैव प्रायशः प्राणनाथः
सखि परिचित एव प्रत्यहं नञ्जराजः।
नयनसरणिलग्ने सा कथं स्यां निरोद्धुं
पुलकितकुचकुम्भोद्भिन्नकूर्पासमन्धिः॥

'परोत्कर्षासहिष्णुत्वमसूया परिकीर्त्यते।'

यथा—

समुद्वहति मेदिनीं यदयमन्वहं नन्वमूं
निजे भुजपदे मुधा किमपि भागधेयं भुवः।
किमेतदपि कौशलं दिवि च कामकेलीविधौ
मनो मदयितुं मनागपि च नञ्जभूमीपतेः॥

'मदिरादिकृतो मोहहर्षव्यतिकरो मदः।'

यथा—

आस्वाद्य नञ्जनृपतेरधरामृतानि
केलीषु पुष्पधनुषः कमलायताक्षी।
आनन्दसारजलधावभितो निमग्ना
साहित्यमेति नितरां स्तिमितान्यभावा॥

श्रमः खेदोऽध्वरत्यादेर्जातः स्वेदादिभूमिकृत्

यथा—

स्निग्धं नूतनहंसतूलशयनं निर्माय तत्रादरा-
दाहूय प्रणयेन नञ्जनृपतिं प्रेमोत्किरन्तं दृशा।
उत्कम्पस्तनमस्फुटप्रियकथं विस्रस्तवेण्यन्तरं
काचिन्मानसिकीं रतिं वितनुते कौतूहलप्रेयसी॥

'मन्दोद्यमत्वमालस्यं कर्तव्येषु प्रकीर्त्यते'

यथा—

हारिद्रकेण किमु रञ्जयसि त्वमङ्गं
लाक्षारसैश्च पदयोरधुना नवीनैः।

आनीयतामिंति(ह?)विलासकलारसज्ञः
प्राणादपि प्रियतमः सखि नञ्जभूपः

'सत्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसम्भवम् ।'

यथा—

समर्प्यैकं हस्ते लुलितलुलितं गण्डफलकं
प्रकीर्णा बाष्पाम्भःप्रसरदुरुवीचीभिरभितः ।
विलीना मोहाब्धौ मनसिजशरावर्तगहने
त्वयि स्वायत्ताशा निवसति परं नञ्जनृपतिम् (ते?) ॥

'इष्टानभिगमात् ध्यानं चिन्ताशून्यत्वतापकृत् ।'

यथा—

व्यत्यस्तहारमतिविश्लथकेशबन्ध-
मालीजनेऽप्यविशदीकृतनर्मभावम् ।
नञ्जक्षितीन्द्र भवदागमनैकदृष्टि-
र्वृष्टिं समर्प्य पद्योरधिसौधमास्ते ॥

'मोहस्तु मूर्छनं भीतिदुःखावेशादिचिन्तनैः ।'

यथा—

निमिषमसहमाना सामि विश्लेषखेदं
क्षणमपि कलयन्ती कल्पवद्दीर्घदीर्घम् ।
स्मरशरदलिताङ्गी सा चिरं नञ्जभूप
त्वयि नियमितचित्ता वर्तते चञ्चलाक्षी ॥

'पूर्वानुभूतविषयज्ञानं स्मृतिरुदाहृनम् ।'

यथा—

विलाससर्वस्वमुदासयन्तं मनाग्विलासैर्मकरध्वजस्य ।
चिराय नञ्जक्षितिपं स्मरन्त्यो नक्तन्दिवं चापि नयन्ति नार्यः ॥

'धृतिश्चित्तस्य नैःस्पृह्यं ज्ञानाभीष्टागमादिभिः ।'

यथा—

सलीलं रथ्यायां व्रजति कुतुकान्नञ्जनृपतौ
स्वलावण्यस्यन्दप्रमुषितमनोजातयशसि ।

---

१ मति OL. २ मनसि OL.

तमेनं पश्यन्त्यास्तरुणपुलकालङ्कृततनो-
मैनागप्यन्यस्मिन्न चलति मनो मञ्जुलदृशः ॥

'चेतस्सङ्कोचनं व्रीडानङ्गरागस्तवादिभिः ।'

यथा—

पश्यन्ती चरणाङ्कितं सचकितं सव्रीडमन्दस्मितं
सव्यानाञ्चलमर्पयन्त्यविरलं गाढस्तनाङ्कूरयोः ।
दृष्टा नञ्जनृपेण सामि वलितग्रीवा नमद्भ्रूलता
शय्यागेहमुपागता शशिमुखी चित्ते विधत्ते मुदम् ॥

'चापलं त्वनवस्थानं रागद्वेषादिसम्भवम्'

यथा—

वारं वारं कुचकलशयोर्विक्षिपन्ती पदाग्रं ( कराग्रं ? )
मन्दं मन्दं मदनकदनं याचमाना दृगन्तैः ।
संपश्यन्ती सरससरसं सत्रपं सानुरागं
काचित् कान्ता कलयति मुदं नञ्जभूपालकेन्दोः ॥

'प्रसक्तिरुत्सवादिभ्यो हर्षस्वेदादिभूमिकृत् ।'

यथा—

मुग्धे त्वन्मुखपङ्कजेन सदृशं लब्धं फलं यत्तदा
तप्तं चन्द्रकलापमूर्ध्नि सरस[ः]प्रान्ते शशिच्छद्मना ।
सप्रेमातिशयं सविस्मयसुखं सोल्लासमन्दस्मितं
पीतं येन रसज्ञमौलिमणिना श्रीनञ्जभूमीन्दुना ॥

'इष्टानिष्टागमाज्जात आवेगश्चित्तविभ्रमः ।'

यथा—

समायाते नञ्जक्षितिपतिलके केलिसदनं
विदित्वा तद्वार्तामतिरभसमालीपरिजनैः ।
व्रजन्ती सोद्वेगं तदभिमुखमम्भोरुहमुखी
परीरम्भं जृम्भत्कुचभरविमर्दं घटयति ॥

---

१ कुतुकं OL.

'जाड्यमप्रतिपत्तिस्स्यादिष्टानिष्टागमोद्भवा ।'

यथा—

विभोर्वीरक्षोणीपतितनुभुवो नञ्जनृपते-
र्ध्वजाग्रे जाग्रन्तं पवनसुतमत्यद्भुततनुम् ।
सकृन्निध्यायन्तः सकृदपिच नालं करधृतं
धनुस्सज्जीकर्तुं रणभुवि विपक्षक्षितिभुजः ॥

'अन्यधिक्करणादात्मोत्कर्षो गर्वो बलादिजः ।'

यथा—

आकर्णप्रतिकृष्य(ष्ट ?)मू (भी ? )षणधनुर्ज्याबन्धसन्धिक्षर-
द्धेलोल्लङ्घिशरौघघट्टनविधिं शैलास्सहेरन्न मे ।
एतैः किं विमतैः पलालकणिकानिस्सारदोर्विक्रमै-
रित्युद्दण्डबला व्रजन्ति समरे नञ्जक्षमाभृद्भटाः ॥

'विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः ।'

यथा—

पराभूतिं प्राप्ताः प्रथितयशसो नञ्जनृपतेः
प्रतापव्यापारात्प्रलयसमयार्कप्रतिभटात् ।
अपीदं कार्पण्यं वयमनुभवामो धिगिह नः
प्रणामैः प्रागेव प्रतिघटनसन्धिर्न रचिता ॥

'कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत् ।'

यथा—

वक्षोजावसकृद्विमृश्य रुचिरामाघ्राय गण्डस्थली-
मास्वाद्याधरबिम्बमप्यनुपदं स्पृष्ट्वा च नीवीपदम् ।
कालक्षेपपरे च नर्मवचनैर्नञ्जक्षितीन्द्रे मना-
गुन्मुक्ता त्रपया स्वयं शशिमुखी वेगादुपागूहते ॥

'आवेशो[†] मोहदुःखाद्यैरपस्मारोऽङ्गतापकृत् ।'

यथा—

अवकर्ण्य नञ्जनृपतेर्वरूथिनीभटसिम्हनादमतिभैरवं रणे ।
परिपन्थिभूमिपतयः स्खलत्पदाः परितो भ्रमन्ति तरुषण्डमाकुलाः ॥

---

१ मनसो CL. † अत्र क्रमप्राप्ता निद्रा नोदाहृता.

'सुप्तिर्निद्रासमुद्रेकः' ।

यथा—

त्रिलोकरक्षाजुषि नञ्जभूपे
मध्येपयोधिं स्वपतो मुरारेः ।
तमेनमुद्बोधयितुं प्रियाया
नालं प्रियालापकथाऽपि लक्ष्म्याः ॥

'निबोधश्चेतनावाप्तिजृम्भाक्षिपरिमार्जकृत् ।'

यथा—

अवति जगदशेषं नञ्जभूपालमौलौ
वितरति विविधार्थानन्वहं पण्डितानाम् ।
समरकरिघटानां दानधारासमीरै-
रनुकलमपि लक्ष्म्यः सम्भ्रमैरुन्मिषन्ति ॥

'अमर्षः सापराधेषु चेतःप्रज्वलनं मतम् ।'

यथा—

शैलाभ्यन्तरकन्दरेष्वभिमतामुल्लङ्घ्य वृत्तिं निजा-
मुद्ग्रीवोन्नमिताननं प्रतिदिशं सोत्कम्पमुत्पश्यतः ।
जानानाः प्रतिपार्थिवान्स्थपुटितभ्रूभङ्गभीमेक्षणा
नञ्जक्ष्मापभटाः सहुङ्कृतिरवं क्रुध्यन्ति युद्धोन्मुखाः ॥

'हर्षाद्याकारसंगुप्तिरवहित्थेति कथ्यते ।'

यथा—

लिखन्ती तं चित्ते हृदयदयितं नञ्जनृपतिं
स्थिता लीलागारे रहसि रमणीयप्रणयिनी ।
अकस्मादायाते प्रियपरिजने सा नतमुखी
कराभ्यामाबध्य स्थगयति पटाग्रेण कुचयोः ॥

'दृष्टेऽपराधे दौर्मुख्यशाठ्यैश्चण्डत्वमुग्रता ।'

यथा—

अस्या निश्वसितोर्मिलेन मरुता प्रम्लानमेनद्धनं
गात्रैर्जङ्झरितैः प्रवालरचितं तल्पं च सन्तप्यते ।

१. वीरे OL.

किं भूयः कथनेन केवलरुषा मामप्यसावीक्षते
तत्ताद्दृग्प्रणयोऽद्य नञ्जनृपतिः सख्यः समानीयताम् ॥

यथा—

कटाक्षोल्कापातैः कलयति सुधांशौ मलिनतां
समन्तादुद्यानं ग्लपयति च निश्वासमरुता ।
पुरस्तादालीनां चलनमपि सैषा न सहते
तदद्यानेतव्यः सखि सरभसं नञ्जनृपतिः ॥

'तत्त्वमार्गानुसन्धानादर्थनिर्धारणं मतिः ।'

यथा—

यशश्चन्द्रज्योत्स्नाधवलितदिशो नञ्जनृपतेः
कलालेशश्रीकः स खलु सुमधन्वा रतिपतिः ।
यदेतैरेकैकप्रमुषितजगच्चक्रविभवै-
र्विलासैरेवासौ विवशयति विश्वं नवनवैः ॥

'मनस्तापाद्यभिभवात् ज्वरादिर्व्याधिरिष्यते ।'

यथा—

श्रीनञ्जभूमीदयितस्य नेतुर्विरोधिकान्ता विरहज्वरार्ताः ।
सखीजनं चापि समानतापं कुर्वन्ति निश्वासपरम्पराभिः ॥

'उन्मादस्तुल्यवृत्तित्वं चेतनाचेतनेष्वपि ।'

यथा—

जयश्रीप्रासादप्रतिभटभुजाग्रस्य महतः
समन्ताद्धावद्भिर्दिशि दिशि भटैर्नञ्जनृपतेः ।
निनादात्सन्त्रस्ता रिपुधरणिपालाः क्षितिरुहां-
श्चलन्तः पृच्छन्ति स्फुटितहृदया वर्त्म पुरतः ॥

मरणं मरणार्थस्तु प्रयत्नः परिकीर्तितः ।

यथा—

नञ्जक्षितीन्द्रस्य कृपाणधारा-
स्वैरावलीढेष्वरिपार्थिवेषु ।
कान्तास्तदीयाः स्मरबाणतप्ता
मोक्तुं यतन्ते ननु जीवितानि ॥

---

१ त्सन्तुद्धा CL.

अत्र साक्षान्मङ्गल ( न्मरण ? ) स्यामङ्गलत्वाद्विरोधिकान्तासु तदनुकूल-प्रयत्नमात्रवर्णनम् ।

'आकस्मिकभयाच्चित्तक्षोभस्त्रासः प्रकीर्तितः ।'

यथा—

मुखकमलमधूलीसौरभास्वादमाद्य-
भ्रमरकुलनिनादात्केवलं तृस ( त्रस्त ? ) चित्ता ।
वनभुवि विचरन्ती सा सखीभिर्लताङ्गी
सरभसपरिरब्धा नञ्जभूपेन साऽभूत् ॥

'सन्देहात्कल्पनानन्त्यं विकल्पः परिकीर्त्तितः ।'

यथा—

समाहूय प्रेमप्रसरसरसैस्तैर्विलसितै-
रपाङ्गव्यापारान् किरति मयि नञ्जक्षितिपतौ ।
सुधाभिः संसिक्तं स्नपितमथ कर्पूरसलिलै-
र्द्रवीभूतं प्रेम्णा वपुरिति न जाने पुनरहम् ॥

अथ शृङ्गारचेष्टा निरूप्यन्ते ।

'भावो हावश्च हेला च माधुर्यं धैर्यमित्यपि ।
लीलाविलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ॥
मोट्टायितं कुट्टमितं बिब्बोकं ललितं तथा ।
कुतूहलं च चकितं विहृतं हास इत्यपि ॥
एवं शृङ्गारचेष्टाः स्युरष्टादशविधाः स्मृताः ।'

तासां स्वरूपमुदाहरणं च

'रसाभिज्ञानयोग्यत्वं भाव इत्यभिधीयते ।'

यथा—

दरविकसदपाङ्गैर्दर्शितस्नेहसारं
कलरवकमनीयं कम्पयन्ती च शीर्षम् ।
स्तनतटमधिनीतां वादयन्ती विपञ्चीं
मदयति मदिराक्षी मानसं नञ्जभर्तुः ॥

'ईषद्दृष्टिविकारस्तु भावो हावः प्रकीर्तितः ।'

---

OL. वा.

चिरप्रणयसूचकैर्नवनवोन्मिषद्भिर्भ्रमैः
पुरो नयनगोचरे भवति नञ्जभूवल्लभे ।
कलक्वणितमेखलं नवनिरुद्धनीवीपुटं
मनाग्विलसितेक्षणं लघु समुज्जिहीते वधूः ॥

'सुव्यक्तविक्रियो भावो हेलेति प्रतिपाद्यते ।'

यथा—

रहःक्रीडालापात्रचयति निजालीपरिजने
मनागप्यानीते श्रवणसरणिं नञ्जनृपतौ ।
समन्तादुज्जृम्भत्कुचदलितकूर्पासनिचयः
प्रगल्भः कोऽप्यस्याः स्पृशति हृदयं मोहविसरः ॥

'अभूषणेऽपि रम्यत्वं माधुर्यं परिकीर्त्यते ।'

यथा—

दृशोः सूते कान्तिः कुवलयवनानि प्रतिदिशं
स्मितज्योत्स्नापूरः सृजति शतमिन्दून्वियति च ।
तनुच्छाया सेयं स्थगयति दिगन्तानविरलं
तदस्या लावण्यं तव हि सदृशं नञ्जनृपते ॥

'शीलाद्यलङ्घनं नाम धैर्यमित्यभिधीयते ।'

यथा—

आबाल्यादनुवर्तनैकरसिकं पत्युस्तदेतन्मनः
शुश्रूषासफलीकृतं नियमतः प्रायो गुरूणां वपुः ।
केनापीदमनिन्दितं क्वचन वा किञ्चास्मदीयं कुलं
दुर्लङ्घ्यं तदपीह नञ्जनृपतिस्तादृग्गुणानां निधिः ॥

'प्रियानुकरणं लीला वाग्भिर्गत्यादिचेष्टितैः ।'

यथा—

मनाक्क्रीडायासे शिशिरमुपचारं रचयति
स्फुटोत्कण्ठे गाढं घटयति परीरम्भमसकृत् ।
निमग्ने मोहाब्धौ स्वयमपि च मज्जत्यतिभृशं
विलासैरप्यन्यैरनुसरति सा नञ्जनृपतिम् ॥

'विच्छित्तिरतिरम्यत्वं स्वल्पैरपि विभूषणैः ।'

यथा—

नवीननारीजनमीनकेतोर्नञ्जक्षितीन्द्रस्य रसज्ञमौलेः ।
यैः कैश्चिदप्याभरणैर्मनोज्ञा हर्तुं मनस्तद्यतते मृगाक्षी ॥

'तात्कालिको विकारः स्याद्विलासो दयितेक्षणे ।'

यथा—

कर्णाग्रलोलदुरुमौक्तिकवालिशोभा-
नीराजितानि नवकन्दलितस्मितानि ।
विस्रंसिनीविनहनानि विलासिनीनां
नञ्जक्षितीन्द्रमुखचन्द्रविलोकनानि ॥

'विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ।'

यथा—

अमुष्मिन्नस्तोकप्रसृमरविलासैकरसिके
समायते नञ्जक्षितिपतिलके केलिसदनम् ।
स्तनौ मुक्तादाम्ना गलमपि च दीप्यद्रशनया
करौ मञ्जीराभ्यां घटयति वधूटी झटिति सा ॥

'रोषाश्रुहर्षभीत्यादेः सङ्करः किलिकिञ्चितम् ।'

यथा—

निर्मर्यादं रमयतिचिरं नञ्जभूपालचन्द्रे
मोहावेशस्तिमितहृदयं दष्टबिम्बाधरोष्ठे ।
सामिक्रोधं दरपुलकितं साश्रु सोत्कम्पगात्रं
पश्यन्ती तत्प्रणयविवशा यत्नशून्या तदाऽऽस्ते ॥

'मोट्टायितं स्यादिष्टस्य कथादौ भावसूचनम् ।'

यथा—

बहुतरसुकृतानां भागधेयैः कथञ्चि-
न्नयनसरणिलग्ने सादरं नञ्जभूपे ।
सचकितललिताक्षं सल्लपन्ती सहासं
विशदयति मनीषामुत्तरङ्गैरपाङ्गैः ॥

---

१ मन्तर OL.

'सम्मर्देऽपि सुखाधिक्यं रतौ कुट्टमितं स्मृतम् ।'

यथा—

तत्तादृक्प्रणयप्रसञ्जितकलव्याहारमाध्वीरसा-
नुत्कीलं श्रवणे किरत्यविरलं नञ्जावनीवल्लभे ।
सद्यः स्वैरनिगूढसौख्यलहरीसम्बाधसम्बोधिनीं
मुद्रां कामपि सूचयत्यविरलैर्भावैः प्रियम्भावुकैः ॥

'मनाक् प्रियकथालापे बिब्बोकोऽनादरक्रिया ।'

यथा—

त्रैलोक्याद्भुतविक्रमस्य महतः श्रीनञ्जभूमीपतेः
स्थित्वा बाहुपदे चिरं भवतु सा विस्रम्भिनी कुम्भिनी ।
सा भूयः परिरंभसम्भ्रमकथा किं मादृशा [मी] दृशां-
मास्तां तावदलीकविप्रियकथालोभेन किं भ्राम्यसि ॥

'सुकुमारोऽङ्गविन्यासो ललितं परिकीर्त्यते ।'

यथा—

चलद्भ्रूवल्लीकं चपलचपलापाङ्गमधुरं
दरस्मेरोदारं दशनरुचिकिञ्जल्करुचिरम् ।
कपोलव्यावल्गत्कनकमयताटङ्कयुगलं
मृगाक्ष्यः पश्यन्ति स्मरमिव नवं नञ्जनृपतिम् ॥

'कुतूहलं रम्यदृष्टौ चापलं परिकीर्त्यते ।'

यथा—

तत्तादृक्प्रतिपक्षपार्थिवधुरं निर्वाप्य दोर्विक्रमै
रथ्यामागतवत्यधिष्ठितगजे नञ्जक्षमावल्लभे ।
सद्योदर्शनलालसा मृदुरणत्काञ्चीकलापा जवा-
दारोहन्ति सुवर्णसौधवलभीशृङ्गाणि पौराङ्गनाः ॥

'चकितं भयसम्भ्रमः ।'

यथा—

रतिगृहमुपनीता स्नेहपूर्वं सखीभिः
चरणकमललग्नालोलदृक्चञ्चरीका ।

---

१ रसा OL. २ रस OL.

मुहुरुपचितलज्जं स्विन्नगण्डस्थलीकं
रचयति ललिताङ्गी कौतुकं नञ्जभर्तुः ॥

'विहृतं प्राप्तकालस्य वाक्यस्याकथनं ह्रिया ।'

यथा—

आलोक्य नञ्जक्षितिपालमौलेः
साम्राज्यलक्ष्म्या परिरब्धमङ्गम् ।
उत्साहिता तेन हितोपचारै-
र्वाचं न काचिद्विशदीकरोति ॥

'आकस्मिकं तु हसितं यौवनादिविकारजम् ।'

यथा—

निशम्य नञ्जक्षितिपालमौले-
र्निसर्गरम्यानमितान्विलासान् ।
सखीजनस्याननतः सलीलं
हसत्यकाण्डे हरिणायताक्षी ॥

अथ शृङ्गारस्याङ्कुरितत्वपल्लवितत्वकोरकितत्वकुसुमितत्वफलितत्वहेतवो द्वादशावस्था निरूप्यन्ते ।

'चक्षुःप्रीतिर्मनस्सङ्गः सङ्कल्पोऽथ प्रलापिता ।
जागरः कार्श्यमरतिः लज्जात्यागोऽथ संज्वरः ॥
उन्मादो मूर्छनश्चैव मरणं चरमं विदुः ।
अवस्था द्वादश मताः कामशास्त्रानुसारतः ॥'

केचिद्दशावस्था इति कथयन्ति ।
तासां स्वरूपमुदाहरणं च ।

'आदराद्दर्शनं चक्षुःप्रीतिरित्यभिधीयते ।'

यथा—

कर्णोत्पलस्थितिमनुक्षणमाक्षिपद्भिः
कन्दर्पकोटिकलनापटुभिः कटाक्षैः ।
कामं किरद्भिरभिलाषमिव स्वकीयं
कर्षन्ति नञ्जनृपतेर्हृदयं मृगाक्ष्यः ॥

'मनस्सङ्गः प्रियतमे नित्यं चित्तस्य विश्रमः ।'

यथा—

आलापान्न शृणोति नैव यतते गातुं च जातु प्रियं
नैव व्याकुरुते न नर्म सरसं पृष्टाऽपि नो भाषते ।
आलीभिः प्रतिबोधिताऽपि किमपि द्रष्टुं नचोत्कण्ठते
सक्तं नञ्जनृपे स्वयं प्रियतमे चित्तं तदस्याश्चिरम् ॥

सङ्कल्पः कान्तविषयमनोरथ उदाहृतः ।'

यथा—

कदा मम मनः सुखं व्रजति मोहसिन्धोस्तटं
कदा मम मनोरथः सफलतां लभेतेदृशः ।
कदा स विजयी भवेत्पुनरपि प्रसूनायुधः
कदा नु रसिको भवेन्मयि स नञ्जभूवल्लभः ॥

'प्रलापः प्रियसंश्लिष्टगुणालाप उदाहृतः ।'

यथा—

चातुर्यं तदनन्यलोकसुलभं सौन्दर्यमन्यादृशं
सौहार्दं हृदयैकवेद्यमथ च स्नेहक्रमस्तादृशः ।
रासिक्यं च रसज्ञमौलिमणिभिः श्लाघ्यं यदीयं स्वयं
सोऽयं नञ्जनृपः प्रियो यदि पुनः प्राप्यं किमैन्द्रं सुखम् ॥

'जागरस्तु विनिद्रत्वम् ।'

यथा—

विष्वक्तापविधायिनं हिमरुचिं भूयः स्तुवाना भिया
सज्जीभूतशराय पुष्पधनुषे शीर्षे वहन्त्यञ्जलिम् ।
गाढाहङ्कृतये वसन्तहतकायावर्तयन्ती शुभा-
न्यायत्ता त्वयि नञ्जभूप लभते निद्रां न च द्रागियम् ॥

'कार्श्यमङ्गस्य तानवम्'

यथा—

मुग्धे त्वं कृशतामुपैषि किममीष्वङ्गेषु सर्वेष्वलं
मत्तोऽप्यद्य मनोरथान्घटयितुं का वा तव प्रेयसी ।
ज्ञातं ते हृदयं निवेश्य तदिदं नञ्जक्षमावल्लभे
त्वामप्यद्य करोमि तत्प्रियसखीं साम्राज्यलक्ष्मीसमाम् ॥

'अत्यन्ताप्रीतिररतिः

यथा—

चन्द्रं निन्दति चन्दनं न सहते रम्यां जहाति स्रजं
विस्रब्धाभिरपि प्रियाभिरुचितं नैवेच्छति क्रीडितुम्।
क्रीडाकाननकुञ्जसीमनि तपोवृत्तिं समाश्रित्य सा
नञ्जक्ष्माप तवाभिमुख्यविधुरा कान्ता भृशं ताम्यति॥

लज्जात्यागो यथा—

कुप्यन्तु नाम गुरवोऽथ जहातु कान्तः
सर्वत्र तां च महिला गिरमुद्गिरन्तु।
नञ्जावनीन्द्र तदयं मम वारणीयः
तापस्तवाधरसुधारससेचनेन॥

'तापाधिक्यं ज्वरो मतः।'

यथा—

आलोक्य नञ्जनृपतिं नरपालचन्द्रं
कन्दर्पतापपरिवेपितगात्रवल्ल्याः।
शुष्यन्ति चन्दनरसाः स्तनयोर्विकीर्णाः
शीर्यन्ति हारमणयः शतधा लताङ्ग्याः॥

उन्मादादिनां प्रागेवोदाहारणमुक्तम्।

' मूर्छा त्वभ्यन्तरे वृत्तिर्बाह्येन्द्रियनिमीलनात् '

यथा—

द्रष्टुं नञ्जमहीकान्तं हृदयस्थं मृगीदृशाम्।
करणानि निमीलन्ति बाह्यानि मनसा सह॥

अथ शृङ्गारः। स च द्विविधः सम्भोगो विप्रलम्भश्च। 'संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः।' इति शृङ्गारतिलके कथितम्।

सम्भोगस्य परस्परालोकनसम्भाषणचुम्बनालिङ्गनाद्यनेकव्यापारमयत्वेनानन्त्यादेकविधत्वेन गणना कृता।

यथा—

व्यक्ताव्यक्तपरस्परप्रियकथं प्रेमावशिष्टाशयं
प्रान्तोन्मीलदपाङ्गसूचितरतिप्रागल्भ्यमस्तत्रपम्।
आनन्दाधिगमादलब्धकरणव्यापारसौख्यं मया
लब्धं भाग्यवशेन नञ्जविभुना मुग्धे रहःक्रीडितम्॥

विप्रलम्भः पुनरभिलाषेर्ष्याविरहप्रवासहेतुकत्वेन चतुर्विधः । अभिलाषो नाम सम्भोगतः प्रागनुरागः ।

यथा—

आकुञ्चितेक्षणमपोढकुचाग्रचेलं
मन्तर्निरुद्धपुनरुन्मुखमोहभावम् ।
नञ्जक्षितीन्द्रसविधे सुदती वसन्ती
वीक्षाभिरेव विशदीकुरुतेऽभिलाषम् ॥

नायकस्यान्यासक्तभावाच्चित्तविक्रिया ईर्ष्या । तया विप्रलम्भो यथा—

आयातेऽपि यदा कदा नु दयिते नैवान्यदाशङ्कते
क्रीडास्वप्यनुवर्तते च हृदयं गाढं विजित्य त्रपाम् ।
मामप्येवमुपेक्षते पुनरयं को वा विधेः प्रक्रमः
का वा नञ्जविभुं स्व [यं] सुखयते जानाम्यहं तामपि ॥

विरहो नाम लब्धसंयोगयोः केनचित्कारणेन पुनःसमागमकालातिक्षेपः ।

यथा—

लीलाविलोकनपचेलिमचेष्टितानि
निःसीमहर्षविवशीकृतजल्पितानि ।
क्रीडासु नञ्जनृपतिः पुनरत्रपानि
तत्तादृशानि विहृतानि कदा करोतु ॥

यूनोर्देशान्तरवर्त्तित्वं प्रवासः, तेन विप्रलम्भो यथा—

आहारे न मतिर्न वा मृदुतरे तल्पेऽपि कालोचितेऽ-
प्यालापे न कुतूहलं न च सखीसम्भाषणेऽप्यादरः ।
आसक्तिर्न पुरोगतेष्वपि दृशोस्तस्याः परं वर्तते
कान्ते दिग्विजयैश्रिया चिरयति श्रीनञ्जभूवल्लभे ॥

इति परमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादित-
निःसहायदैनन्दिनप्रबन्धनिर्माणसाहसिकनिखिलविद्वज्जनलालनीयसर-
ससाहितीसम्प्रदायप्रवर्त्तकनरसिंहकविविरचिते नञ्जराज-
यशोभूषणे अलङ्कारशास्त्रे रसनिरूपणं
नाम चतुर्थो विलासः ॥

---

१ येच्छ OL.

# अथ पञ्चमो विलासः

करुणारसकल्लोलकलितापाङ्गवीक्षणम्।
कन्दर्पजनकं धाम कल्याणानि करोतु नः॥
वचसां कल्प्यमानानां कैश्चित्सुकविमानिभिः।
क्रमः ( मात्? ) प्रदर्श्यते क्षुद्रनायको दोषसङ्कुलः॥

प्रबन्धवर्णनीयनञ्जराजेतरक्षुद्रनायकप्रतिपाद्यकुकविकल्पनीयकवितामार्गप्रदर्शनव्याजेन दोषा निरूप्यन्ते।

'दोषः काव्यापकर्षस्य हेतुः शब्दार्थगोचरः।'
रसापकर्षोपादकत्वं दोषत्वम्, तदुक्तम्—
'मुख्यार्थहतिर्दोषो रसस्तु मुख्यस्तदाश्रयाद्वाच्य' इति।

ते च शब्दार्थगतत्वेन द्विविधाः। शब्दगताश्च पदवाक्यगतत्वेन द्विविधाः। तत्र तावदवाचकच्युतसंस्कृतपरुषसन्दिग्धासमर्थाश्लीलविरुद्धमतिकृदप्रयुक्तापुष्टार्थक्लिष्टनिरर्थकनेयार्थाप्रयोजकग्राम्यगूढार्थाविमृष्टविधेयकाप्रतीताख्याः सप्तदश पदगतदोषाः तदुक्तम्—

'अप्रयुक्तमपुष्टार्थमसमर्थं निरर्थकम्।
नेयार्थं च्युतसंस्कारं सन्दिग्धं चाप्रयोजकम्।
क्लिष्टं गूढार्थकं ग्राम्यमन्यार्थं चाप्रतीतकम्॥
अविमृष्टविधेयांशं विरुद्धमतिकृत्तथा।
अश्लीलं परुषं चेति दोषाः सप्तदश स्मृताः॥'

अन्यार्थकमवाचकमिति यावत्। तत्रावाचकच्युतसंस्कृते यथा—

द्वित्रैः पर्णैर्वत्सरवेतनेन प्रसाधिताः केचन संस्तुवन्ति।
नञ्जप्रभो त्वद्रिपुमङ्गराजं घटाब्धिकीर्ते विजयेति नित्यम्॥

अत्र क्षीरवाचकत्वेन प्रयुक्तं घटपद[म]वाचकम्, विजयेत्यात्मनेपदस्य परस्मैपदत्वेन प्रयोगाच्च्युतसंस्कृतम्। 'शब्दशास्त्रविरुद्धं यत्पदं तच्च्युतसंस्कृत'मित्युक्तेः।

'परुषं नाम तद्यत्स्याद्विहितं परुषाक्षरैः।

सन्दिग्धं तन्मतं यत्स्यात्सन्दिग्धार्थप्रतीतिकृत् ।'

उभयमपि यथा—

नश्यतु तेऽभ्युद्धूता(?)नङ्गविभुक्रोधतोऽद्य निषधेश ।
सेव्या न कदापि नृपैर्मानिभिरस्ये(न्ये?)दितानताशास्य ॥

अत्राभ्युद्धूतेति परुषम्, दितं खण्डितं आनतानामाशास्यं येनेति वा अदितं अखण्डितं आनतानामाशास्यं येनेति वा सन्देहात्सन्दिग्धम् ।

'योगमात्रप्रयुक्तं यदसमर्थं तदुच्यते ।
अश्लीलं तदमाङ्गल्यजुगुप्साव्रीडकारणम् ॥'

अश्लीलं त्रिविधं जुगुप्साकरं व्रीडाकरममङ्गलकरं चेति ।

उक्तोभयमपि यथा—

मेदस्विन्नम्बुधरवद्रत्नैस्तर्पय बान्धवान् ।
काण्डपृष्ठं करे कुर्वन्काम्भोजेश रिपून् जहि ॥

अत्र अम्बुधरवदिति समुद्रवाचकत्वेन प्रयुक्तं पदमसमर्थम्, मेदस्विन्निति जुगुप्साकरम्, तर्पयेत्यमङ्गलम्, काण्डेत्यादिपदं व्रीडाकरम् ।

'विपरीतार्थधीर्यस्माद्विरुद्धमतिकृन्मतम् ।'

यथा—

तव नित्यं पूर्णकाम ध्वजोच्छ्रयणदर्शनात् ।
विवर्तितास्या धावन्ति भीरवो मालवाधिपम् ॥

अत्र सम्बुध्यन्ततया प्रयुक्तस्य पूर्णकामेति पदस्य उत्तरपदेन सह समस्तत्वेन प्रतीतिर्विरुद्धमतिकृत् ।

'यदप्रयुक्तं कविभिरप्रयुक्तं तदुच्यते ।
प्रकृतानुपयुक्तार्थमपुष्टार्थं तदुच्यते ॥'

द्वयमपि यथा—

वनवर्तिन्पाण्डव पुरा न त्वया दैवतः स्मृतः ।
द्वादशार्धार्धनयनो यः सकृत्स्मरतां निधिः ॥

अत्र दैवतानि वा पुंसीति कोशोक्तमपि पुंस्त्वेन प्रयुक्तं कविभिरप्रयुक्तत्वादप्रयुक्तमिदं पदम् । त्रिलोचनेति विवक्षितेऽर्थे द्वादशार्धार्धेत्यादिविभागस्यानुपयोगादपुष्टार्थम् ।

'क्लिष्टं तदर्थावगतिर्दूरैर्दूरा[1] यतो भवेत् ।
पादपूरणमात्रं यत्तन्निरर्थकमुच्यते ॥'

द्वयमपि यथा—

शक्रजारातिसोदर्यहर्यैरेव समं वने ।
ललाटे लाट ते वासो विधिना लिखितो ह वै ॥

अत्र शक्रजः—अर्जुनः, तदरातिः कर्णः, तत्सोदर्यो यमः, तस्य हर्यैर्महिषैरिति व्यवहिततयाऽर्थावगतेः क्लिष्टम् । ह वै इति पादपूरणार्थकं निरर्थकम् ।

'स्वसङ्केतप्रसिद्धार्थं नेयार्थं परिकीर्त्यते ।
तदप्रयोजकं यत्स्यादविशेषविधायकम् ॥'

द्वयमपि यथा—

व्यत्यस्तराजाध्वगता तव श्रीस्सिद्धलेश्वर ।
रणरात्रिषु नञ्जेन्द्रं वृणीते धवलाम्बरा ॥

अत्र व्यत्यस्तराजेतिपदेन जारोऽभिधीयत इति नेयार्थम् । धवलेति पदमविशेषविधायकत्वादप्रयोजकम् ।

'पामरव्यवहारैकप्रसिद्धं ग्राम्यमुच्यते ।
प्रयुक्तमप्रयुक्तार्थं गूढार्थं परिकीर्त्यते ॥'

द्वयमपि यथा—

हसने निम्नगल्लां तां वनितां शोणितालकाम् ।
उद्वहन्निर्गतो देशात्कोङ्कणो मुक्तकङ्कणः ॥

अत्र शोणितपदमरुणवर्णत्वेनाप्रसिद्धं गूढार्थम्, गल्लेति ग्राम्यम् ।

'अविमृष्टविधेयांशं गुणीभूतविधेयकम् ।'

यथा—

नालं सहस्रनेत्रोऽपि वन्यवृत्त्यैव जीवतः ।
लम्पाकभूमिपालस्य दुर्विपाकं विलोकितुम् ॥

अत्र नेत्रसहस्रस्य विलोकनापर्याप्तत्वेन विधेयस्य गुणीभावादविमृष्टविधेयांशता ।

---

1 दूराद्दूरा OL.

'शास्त्रमात्रप्रसिद्धं यदप्रतीतं तदुच्यते ।'

यथा—

नञ्राजभटच्छिन्नां नासां प्रच्छाद्य विद्रवन् ।
मानक्लेशान्वितोऽपि त्वं किं महीपाल जीवसि ॥

अत्र क्लेशपदमभिनिवेशपरत्वेन योगशास्त्रमात्रप्रसिद्धम् ।

यद्वा—

कैश्चिदाज्ञापदं लूनं करेणावृत्य विद्रवन् ।
चतुरोऽपि भवान्चोल लीयसे क्वापि कानने ॥

अत्र भ्रूप्रान्तबोधकमाज्ञापदं योगशास्त्रमात्रप्रसिद्धमप्रतीतमिति पदगता दोषाः ।

अथ वाक्यदोषाः

शब्दहीन–क्रमभ्रष्ट–पुनरुक्त–विसन्धिक–सम्बन्धवर्जित–यतिभ्रष्ट–विभिन्नलिङ्गवचनोपमा–प्रक्रमभङ्ग–व्याकीर्ण–वाक्यसङ्कीर्ण–वाक्यान्तरसङ्कीर्ण–अरीतिक–अधिकोपम–विसर्गलुप्त–न्यूनपद–अधिकपद–च्छन्दोभङ्ग–समासपुनरात्त–अशरीर–अपूर्ण–पतत्प्रकर्ष–हीनोपम–अस्थानसमासाख्याश्चतुर्विंशतिर्वाक्यदोषाः ।

एषां स्वरूपमुदाहरणञ्च—

'शब्दशास्त्रहतं काव्यं शब्दहीनं तदुच्यते ।'

यथा—

वर्षन्त्यमी जलधरा वारि यदुवीधरेन्द्रनिकटेषु ।
तदिदं स्मरयत्यस्मान्नञ्प्रभुसैन्यकार्मुकविलासान् ॥

अत्र वारि वर्षन्तीतिपदद्वयप्रयोगदोषाद्वाक्यमेव दुष्टम्, प्रसिद्धकर्मस्थले न कर्मोपादाननियम इति शब्दशास्त्ररीतिः

'क्रमभ्रष्टं भवेदार्थश्शाब्दो वा यत्र न क्रमः ।'

यथा—

विद्वद्भ्यो वाञ्छितानर्थान्वितरत्यान्ध्रभूपतौ ।
कल्पद्रुं कर्णमपि वा न कोऽपि परिसेवते ॥

अत्र कर्णं वा कल्पद्रुममपि वेति कथनीयेऽपि व्युत्क्रमेणोक्तम्, कर्णापेक्षया कल्पद्रोरुत्कृष्टत्वादर्थक्रमभङ्गः ।

१ दोषाविष्कारा OL.

शब्दक्रमभङ्गः पौनरुक्त्यञ्च यथा—

कृपाणकीर्तिसौन्दर्यैरिन्दुकन्दर्पवारिदान् ।
निन्दन् जगद्विजयते निषधेशो जगज्जयी ॥

कृपाणकीर्तिसौन्दर्यैर्वारिदेन्दुकन्दर्पानित्युचिते शब्दक्रमे तथा नोक्तम्, कृपाणादिभिरिन्दुकन्दर्पवारिदानिति यथायोग्यं समुदायद्वयान्वयेऽर्थान्वयसिद्धेर्नात्रार्थक्रमभङ्गः, अपितु शब्दप्रयोग एव । जगज्जयी जगद्विजयत इति पौनरुक्त्यम् ।

'विसंहितो विरूपो वा यत्र सन्धिर्विसन्धिमत् ।
सम्बन्धवर्जितं तत्स्याद्यत्रेष्टेनान्वयो हृतः ॥
यत्र स्थाने यतिभ्रंशस्तद्यतिभ्रष्टमुच्यते ।'

त्रितयमपि यथा—

रवीन्द्वौदार्यभाग्भूया जय आचन्द्रतारकम् ।
रणरङ्गसमर्थो भवान् जयश्रीर्हि नर्तकी ॥

अत्र रवीन्द्वौदार्येति विरूपरूपो विसन्धिः, जय आचन्द्रेति विसम्हितात्मा विसन्धिः, समर्थो भवानिति यतिभ्रंशः, जयश्रीरूपाया नर्तक्याः भवतो रणएव रङ्ग इति सम्बन्धोनोक्त इति सम्बन्धवर्जितम् ।

'यत्रोपमा भवेद्भिन्नवचना भिन्नलिङ्गका ।
तद्भिन्नवचनं भिन्नलिङ्गं चाहुर्मनीषिणः ॥
प्रक्रान्तनियमत्यागे भग्नप्रक्रममुच्यते ।'

त्रितयमपि यथा

त्वद्भद्रपीठमिव राजति पूर्वशैल-
स्तस्मिन्भवानिव विभाति विभावरीशः ।
नेपालभूमिप यशोभिरिव त्वदीयै-
श्चन्द्रातपेन धवलीभवति त्रिलोकी ॥

अत्र पूर्वार्धे वाक्यं भिन्नलिङ्गोपमम्, उत्तरार्धे तु भिन्नवचनकं तत्

पूर्ववाक्ये प्रथमान्तत्वेनोपमानोपमेययोर्ग्रहणादुत्तरवाक्ये तृतीयान्तत्वेन ग्रहणाच्च प्रक्रमभङ्गः ।

'व्याकीर्णं तद्विभक्तीनां व्याकीर्णे तु मिथोऽन्वये ।'

यथा—

संस्मरन्वचसा कार्यं मनसा मृदुलं वदन् ।
अरिष्वभिनयन्मैत्रीं मर्मज्ञो जहि तान्विभो ॥

अत्र मनसा स्मरन् वचसा वदन्निति सम्बन्धो व्याकीर्णः ।

'वाक्यान्तरपदैः कीर्णं वाक्यसङ्कीर्णमुच्यते ।'

यथा—

आकर्ष चापे प्रणतान् कचेषु क्षुद्रान् समारोपय मुञ्चबाणान् ।
इत्थं त्रिलिङ्गाधिप सैनिकानां कोलाहलः क्रामति दिङ्मुखानि ॥

अत्र क्षुद्रान्कचेष्वाकर्ष, चापे बाणान् समारोपय, प्रणतान्मुञ्चेति वक्तव्ये भिन्नभिन्नवाक्यपदानामन्योन्यसङ्कलनाद्वाक्यसङ्कीर्णम् ।

'तद्वाक्यगर्भितं यत्स्यान्मध्ये वाक्यान्तरं भवेत् ।'

यथा—

धैर्यञ्चेदिदमस्य मूर्तिसुषुमा यद्यस्तु दूरे स्मरो
मेरुर्मे नच रोचतेऽद्य जगतां भूयः प्रियम्भावुकम् ।
पश्यामुं सुसुखीति सस्मितगिरः सङ्घीभवन्ति स्त्रियो
रथ्यामागतवत्यधिष्ठितगजे पाञ्चालपृथ्वीश्वरे ॥

अत्र—अस्य धैर्यं चेन्मेरुर्मे न चेत्यनन्तरं मूर्तिसुषुमेत्यादिवाक्यस्य विशिष्टस्य सुवेदतया तथाऽकथनाद्वाक्यान्तरसङ्कीर्णम् ।

'रसाननुगुणा रीतिर्यत्रारीतिकमुच्यते ।'

यथा—

दिवसमुखविभिन्नाम्भोजपत्रेक्षणाभि-
ध्वनदलिनिकुरुम्बभ्रान्तिभृत्कुन्तलाभिः ।
तरुणकनककुम्भोद्भासिवक्षोरुहाभि-
र्भज सुखमबलाभिर्धूर्जरात्यूर्जितश्रीः ॥

अत्रारभटीवृत्तिरपि प्रौढवर्णा गौडीरीतिश्चेत्येतच्छृङ्गाररसविरोधि । ध्वनदलिनिकुरुम्बेत्यत्र ध्वनदिति पदं विनाऽप्यौपम्यसिद्धेरधिकोपमा चेयम् ।

'यत्रोपमानमधिकं न्यूनं वा स्याद्विशेषणैः ।

तत्राऽधिकोपमं पूर्वं न्यूनोपममतः परम् ॥' इति लक्षणात् ।

यथा वा—

नेपालमहिपालस्य कृपाणो राजते रणे ।
मदालसानां भूपानां यशोराकेन्दुराहुवत् ॥

अत्र वीररसे कैशिकी वृत्तिरतिकोमलवर्णा वैदर्भीरीतिश्चात्यन्तविरुद्धे ।

'ओत्वलोपौ विसर्गस्यासकृल्लु†प्तविसर्गकम् ।'

यथा—

भूयोविसर्जनीयानां श्रवणौत्वविलोपनैः ।
बहाह(ह्राह्ल ?)तविसर्गं स्यादि(द ?)तिलुप्तविसर्गकम् ॥

बहाह(हा ह्र ?)तविसर्गमित्युच्यते यथा—

अस्त्रैः प्रमथितैरश्वैः कुन्तैः कृत्तैः करिव्रजैः ।
कलिङ्गः कुरुते भूपो दिशो निबिडितान्तराः ॥

येन विना वाक्यमनुपपन्नं तदप्रयोगे न्यूनपदम्, इदमेव वाक्यवर्जितमित्युच्यते । यथा–अत्रैव श्लोके करिव्रजैरपीत्यपिशब्दस्य समुच्चयबोधकस्यानुपादानात्न्यूनपदम्

अधिकपदच्छन्दोभङ्गसमासपुनरात्तादित्रितयमपि यथा—

त्वत्प्रतापो विदर्भेन्द्र कुङ्कुमाकारकान्तिमान् ।
रञ्जयत्यखिलाः काष्ठाः ( दिशः ?) रक्तोत्पलसमद्युतिः ॥

अत्र कु(आ ?) कारपदमधिकम्, रञ्जयत्यखिला दिश इति छन्दोभङ्गः, समासस्थ वाक्यस्य रक्तोत्पलेत्यादिना पुनरादानात्समासपुनरात्तकम् ।

'यत्राधिकपदोक्तिः स्यात्तत्राधिकपदं मतम् ।
छन्दोभङ्गं वचो यत्र तद्भग्नच्छन्द उच्यते ॥
समासपुनरादाने समासपुनरात्तकम् ।'

इति त्रयाणामपि लक्षणात् ।

'क्रियापदेन रहितमशरीरं प्रकीर्त्यते ।

यथा—

बाह्लीकाधिपकान्तानामुष्णबाष्पाम्बुनिर्झराः ।
विपिने पूरिता बालाः साश्रिनश्शुष्कपल्लवान् ॥

† लुप्तविसर्गस्योदाहरणं निर्गलितम् .

अत्र क्रियापदाभावादशरीरम् ।

'अपूर्णं तद्भवेद्यत्र न सम्पूर्णः क्रियान्वयः ।'

यथा—

सम्पादिता ननु मयैव मदेभकोटि-
नौल्पाध्वलङ्घनचणाश्च हया मदीयाः ।
भीमभ्रमद्भ्रुकुटिभिश्च भटैः परीतं
मामप्यहो न वृणुते स्म कुतो जयश्रीः ॥

अत्र—मदेभकोटिमन्तं तादृशाश्ववन्तं तादृग्भटयुक्तं मामपि जयश्रीर्न वृणुते स्म, इति विवक्षितस्सम्बन्धो न सम्पूर्णः ।

'पतत्प्रकर्षं तत्प्राहुः प्रकर्षो यत्र विश्लथः ।'

यथा—

कस्मात्त्वमागतो देशाद्वने मरटभूपते ।
मरटादुद्भटभटाद्धावदश्वाद्भ्रमद्गजात् ॥

अत्र प्रकृष्टविशेषणानां व्यत्यासेन कथनात्पतत्प्रकर्षः ।

हीनोपमं न्यूनोपमम्, तल्लक्षणं पूर्वोक्तम्,

यथा—

युष्मत्प्रतापा इव वैरिभूपा दावानलज्वालदुरापरूपाः ।
निराकृता नीरभृतेव राजन्सुवर्णबद्धत्सरुणाऽसिना ते ॥

अत्र नीरभृतः सुवर्णबद्धत्सरुखङ्गस्य च साम्यकथनान्न्यूनोपमा ।

'अपदस्थसमासं तत्समासो यत्र नोचितः ।'

यथा—अत्रैव पद्ये दावानलज्वालदुरापरूपा इति वैरिभूपविशेषणे अपदस्थसमासः, अयं भीषयितरि प्रयोक्तव्यो न भीषणीयेषु । इत्येते दोषाश्चतुर्विंशतिः । तदुक्तम्—

'शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत् ।
व्याकीर्णं वाक्यसङ्कीर्णमपूर्णं वाक्यगर्भितम् ॥
विभिन्नलिङ्गवचने येच न्यूनाधिकोपमे ।
भग्नच्छन्दो यतिभ्रष्टमशरीरमरीतिकम् ॥
विसर्गलुप्तमस्थानसमासं वाच्यवर्जितम् ।
समासपुनरात्तं च तथा सम्बन्धवर्जितम् ॥

पतत्प्रकर्षमधिकपदं प्रक्रमभङ्गवत् ।
चतुर्विंशतिरित्येते दोषा वाक्यसमाश्रिताः ॥'

अथार्थदोषाः

'अहेतुव्याहतग्राम्याश्लीलाः सहचरच्युतः ।
अक्रमानुचितापार्था न्यूनासिद्धोपमे दश ॥'
'हेतोर्विनाऽर्थकथनं हेतुशून्यं प्रचक्षते ।'

यथा—

वेगावतीर्णतुरगो यवनाधिपालः
कौक्षेयकं करगतं पुरतो निधाय ।
जानुद्वयेन धरणीमुपविश्य भूयः
शृङ्गाटके गगन एव दृशौ विधत्ते ॥

अत्र चन्द्रसेवनेच्छयेति हेतुर्नोक्तः
'व्याहतं देशकालादिविरुद्धं परिकीर्त्यते ।'

यथा—

द्वयमप्यत्र सौख्याय पौरस्त्यो मलयानिलः ।
वर्षानिशीथनिर्निद्रकमलं विमलं सरः ॥

अत्र पौरस्त्यो मलयानिल इति देशविरोधः वर्षानिशीथेत्यादौ कालविरोधः ।

'पामरच्छान्दसोक्तिर्यत्तद्ग्राम्यं परिकीर्त्यते ।'

अत्र पामरोक्तिर्यथा—

श्वा भवानिव तत्रासीत्सम्भ्रगोऽहमिवाग्रतः ।
कण्ठग्राहं गृहीतोऽभूदयं तेन ससत्वरम् ॥

छान्दसोक्तिर्यथा—

कृपाणकृष्णमार्जारस्तव पाण्ड्य विरोधिनाम् ।
यशःक्षीरं पिबत्याशु त्रिजगद्भाण्डसंस्थितम् ॥

यथा वा—

दिग्वधूटीदुकूलानि द्विषत्कीर्त्याह्वयानि हि ।
खण्डयन्ते पाण्ड्यसैन्यानां मण्डलाग्रा(ग्र्यो ?)प्रमूषकैः ॥

यथा वा—

सन्धीकरणचातुर्यै स्वीयानां परवञ्चने ।
द्विपात्पुच्छेन रहितो जम्बुकः कोङ्कणेश्वरः ॥

'अश्लीलार्थस्य कथनमश्लीलं परिकीर्त्यते ।'

यथा—

सेनामुखे तीक्ष्णपातदण्डं पाण्ड्य विलोक्य ते ।
चमूरुमध्ये विपिने विलीयन्ते विरोधिनः ॥

'हीनैस्सहैवोत्कृष्टानां पातः(ठः ?) सहचरच्युतः ।'

यथा—

सिम्हैर्मन्दरकन्दरो वृककुलैर्व्याघो रसालः पिकैः
शृङ्गैः काननसैरिभा जलधिजो दन्तैश्चतुर्भिर्गजः ।
गन्धैर्गन्धविडालमुष्ककुहरं त्वं चापि काञ्चीपते
निर्व्याजोपनतैर्निकाममधुरैराश्रीयसे सद्गुणैः ॥

कथ्यते क्रमवाक्यार्थव्युत्क्रमोऽक्रमनामकः ।

यथा—' कस्मात्त्व'मित्यादि । [ ६९ प ]

यद्योग्यस्य कथनं तदेवानुचितं विदुः ।

यथा—

आकीर्णकुन्तलमुदञ्चितदैन्यमुद्यत्स्वेदं भयाद्गणितस्खलितोत्तरीयम् ।
चञ्चीपुरात्प्रतिदिशं चलिता लताङ्गीरन्वक् चलन्ति यवना मदनानुविद्धाः ॥

अत्र भीतासु स्त्रीषु पुंसां रिरंसाकथनमनुचितम् ।

समुदायार्थशून्यं यत्तदपार्थं प्रकीर्त्यते ।'

यथा—

काम्भोजः कलिकाम्भोजः कुन्तलः कीर्णकुन्तलः ।
गान्धारो गानचतुरः काञ्ची काञ्चीमुदं ददौ ॥

यथा वा—

कुशलं तव भूपाल कावेरी सप्तपर्वतात् ।
काककोकिलयोर्मैत्री मुसलं भक्षयत्यसौ ॥

अत्र न कोपि वाक्यार्थः ।

यत्रोपमानहीनं स्यात्तद्धि हीनोपमं मतम् ।

यथा—

सामर्थ्यं म्लेच्छसैन्यानां द्विषद्विद्रावणे न चेत् ।
हयानुधावने शक्तिर्महिषाणां च नो भवेत्

अत्र सैन्यानां महिषैस्सह व्यङ्ग्यमौपम्यं हीनम्

अप्रसिद्धोपमानं तदसिद्धोपममुच्यते ।'

यथा—

ताटकेवाऽनवद्याङ्ग्यो हंसीवायतलोचनाः ।
मञ्जुवाचश्चकोरीव राजन्ते कुकुराङ्गनाः ॥

अत्र निबन्धान्तरस्थाः केचन दोषाः प्रदर्श्यन्ते ।

'अलङ्कारेण रहितं निरलङ्कारमुच्यते ।'

यथा—

माहिष्मतीपुरप्रान्ते मुहुराघ्राय मेदिनीम् ।
पदमेकं समुद्धृत्य श्वा मूत्रं विसृजत्यहो ॥

अत्र न कश्चिदलङ्कारः श्लाघ्यविशेषणाभावान्न स्वभावोक्तिः ।

'यत्रोपमानमधिकं तद्भवेदधिकोपमम् ।'

यथा—

आवृताश्शबरा यान्ति श्वभिः सरभसोत्प्लुतैः ।
मृगेन्द्रशिशुसंवीताः पादा इव महीभृताम् ॥

अत्र श्वभिस्सह प्रतीयमानं सिम्हशिशुसाम्यमधिकम् ।

'यदतुल्योपमानं स्यात्तद्भवेदधिकोपम'मिति वा

यथा—

( 'यदतुल्योपमानं तद्भवेदसदृशोपमम् ।' यथा ? )

रेजे काम्भोजभूजानिरप्रमाद्यत्तुरङ्गमः ।
अलिवृन्दसमाक्रान्तमरविन्दमसौ यथा ॥

'यत्प्रयोजनशून्यं स्यात् व्यर्थं तत्परिकीर्त्यते ।'

द्रविडेन्द्रपुरावासो द्विजो दोर्भ्यां तरेन्न किम् ।
स्रजश्च रचयेत्सोऽपि कथं स न कविर्भवेत् ॥

अत्र कवित्वसम्पादने नदीतरणादिकमप्रयोजकमित्यर्थदोषः। सर्वेऽप्येतेऽनुकरणे न दोषाः।

अप्रतीतं शास्त्रोक्तार्थप्रकाशने न दोषः, ग्राम्यस्य विरुदादिकथनेऽप्रयुक्तस्यैकाक्षरादौ व्रीडादायिनो रतिभेदे अमाङ्गल्यस्य शत्रुवर्णने जुगुप्सितस्य विरक्तोक्तौ निहतनिरर्थयोर्यमकादावनुचितार्थस्य विशेषप्रतीतौ श्रुतिकटुत्वादीनामपि रौद्रादावदोषत्वम्। इतिदोषनिरूपणम्।

अथ गुणा निरूप्यन्ते।

रसोत्कर्षापादकत्वं[गुणत्वम्]ते च (ते पुनः ?) गुणाः।
माधुर्यौजःप्रसादाश्चाप्यर्थव्यक्तिरुदात्तता॥
औदार्य-सुकुमारत्व-समत्व-श्लेष-कान्तयः।
सौक्ष्म्य-विस्तर-सङ्क्षेपाः सौशब्द्यौ-र्जित्य-भाविकम्॥
प्रेय-स्समाधि-गाम्भीर्य-गति- प्रौढयुक्ति-रीतयः।
सम्मितत्वमिति प्रोक्तास्तेषामालोच्यते स्थितिः॥

गुणांश्चतुर्विंशतिमाह भोजो
वदन्ति चैतान्दश वामनाद्याः।
आचक्षते त्रीनथ भामहाद्या।
युक्तं तदत्रैव हि भामहीयम्॥

'या पृथक्पदता वाक्ये माधुर्यं परिकीर्त्यते।

यथा—

जानासि किं, जलरुहाक्षि किमद्य वेद्यं,
नङ्गप्रभुः क वसतीति, अयि निष्कुटेऽस्मिन्।
कुर्वन् किम्, आकृतिमसौ विलिखन्प्रियायाः,
काऽन्या प्रिया, अलमपदे विशयैस्त्वमेव॥

इदं सखीनायिकयोरुक्तिप्रत्युक्तिरूपं वचनम्।

अत्र वाक्ये पाठसमय एव पृथक्त्वप्रतीतेर्माधुर्यम्।

'ओजःसमासभूयत्वम्।'

यथा—

भ्राम्यन्मत्तमदावलेन्द्ररदितप्राग्भारसंवर्गित-
स्फारोद्विक्रममाणतुङ्गतुरगप्रक्रान्तहेषोद्धताः।

शस्त्राशस्त्रिविखण्डिताहितशिरोरुण्डैः प्रचण्डक्रमैः
वैधात्रस्य मुनेर्मुदं विदधते नञ्जक्षमाभृद्भटाः ॥
'वक्त्रं जलमिव स्वच्छं वसन्त इव काननम् ।
व्याप्नोति श्रोतृचेतो यः स प्रसादो गुणो मतः ॥'

यथा—

कीर्तिप्रतापरुचिभिर्भवतो नञ्जेन्द्र लसति जाती(जगती ?)यम् ।
नवमल्लिदाम न कथा (निभृता ?) कुङ्कुमरागेण रञ्जितेव वधूः ।
एते त्रयो भामहादिसम्मताः ।
'यत्तु सम्पूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम् ।'

यथा—

नञ्जक्षितीन्द्रे शशिनः कुलेऽस्मिन् जाते दिगन्तैर्विदुषां मनोभिः ।
समं प्रसीदे प्रतिपक्षभूपैर्लीये समं क्वापि जनोपसर्गैः ॥
अत्रार्थप्रतिपादने वाक्यस्य निराकाङ्क्षतया परिपूर्णत्वादर्थव्यक्तिः ।
'श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता ।'
प्रौढपदबन्धत्वमौदार्यम् ।

द्वयमपि क्रमेण यथा—

अवनिमवति नञ्जक्ष्माधिपाले सलीलं थलथलितकपोला सन्ततं मन्दहासैः ।
थगथगिततनुश्रीबन्धुरा भूषणाद्यैर्युवतिरजनि नेतुर्नर्मदोद्री(दात्री ?) न का वा ॥

अत्रथलथलित्यादिश्लाघ्यविशेषणयोगः ।

नञ्जक्ष्मापालसैन्यक्षपितगुरुमदक्षत्रनासीरसीमा-
स्रंसत्स्रोतस्विनिस्राः क्षतगलविगलच्चर्मचेलं दधानाः ।
अङ्गान्यालिप्य केचिन्नवरुधिरवसागन्धपङ्कैः पिशाचाः
कुप्यन्नव्यं ग्रहिण्यं करतलनिहितं सम्भ्रमाक्षिप्य(?)क्वणन्ति ॥ (?)

'सुकुमाराक्षरप्रायं सौकुमार्यं प्रतीयते ।'
सौकुमार्यं नाम सानुस्वारकोमलवर्णता ।

यथा—

पुरन्दरपुरारामन्दारामोदमेदुराः ।
नञ्जराजगुणा वाचो रञ्जयन्ति मनीषिणाम् ॥

'अवैषम्येण भणनं समत्वं तन्निगद्यते ।'

यथा—

कदा करुणवारिधिस्त्वयि दयेत नञ्जप्रभुः ।
　　कदा भवदुपागमं वद श्रृणोमि सख्या मुखात् ॥
कदा तव मुखाम्बुजं प्रिय पिबामि नेत्राञ्चलैः ।
　　कदा स्व( स ? )समयो भवेददह यत्र नासङ्गतिः ॥

इदं प्रतिष्ठासुं कञ्चन राजानं प्रति प्रियावचनम् ।

'मिथस्संश्लिष्टपदता श्लेष इत्यभिधीयते ।'

बहूनां पदानामेकवदवभासमानत्वं श्लिष्टत्वम् ।

यथा—

अमरपतिममितवैभवमपहसति हि वीरविभुसुतो नृपतिः ।
विशदयति भुवनमपि भृशपरिणतशरदिन्दुसवयसा यशसा ॥

अत्र पदानामेवा( कतया ? )वभासमानत्वम् ।

'अत्युज्वलत्वं बन्धस्य काव्ये कान्तिर्निगद्यते ।'

यथा—

'शाणोत्तेजितपद्मराग शकले'त्यादि। [ १९ प] एते दश गुणाः वामनादिसम्मताः ।

'अन्तस्सञ्जल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते ।
गतिर्नाम सुरम्यत्वं स्वरारोहावरोहयोः ॥'

आरोहावरोहौ नाम दीर्घत्वह्रस्वत्वे ।

यथा—

सङ्क्रीड( सङ्कूज ? )न्ति स्म पूर्वं प्रमुषितयशसः केपि कौतस्कुतैर्ये
　　गर्वैरूर्व्यंशभाजः करनिहितमुखा हेमकूटस्थलीषु ।
नञ्जक्ष्मापालवीरं नतजनसुलभं साम्प्रतं सेवमानाः
　　सङ्क्रीडन्ते तएव प्रमुदितमनसः स्वर्णसौधाङ्गणेषु ॥

अत्र पद्ये सङ्क्रीड(सङ्कूज ?)न्तीति पदेन कूजनमर्थः ( नार्थेन ? ) निगूह्य जल्प्यत इति सौक्ष्म्यम्, गम्यते स्वराणामारोहावरोहौ चेति गतिः ।

'प्रपञ्चनं चेत्संक्षिप्य कथितार्थस्य विस्तरः ।'

यथा—

असंशयं विश्रुतविक्रमौ द्वौ नञ्जक्षितीन्द्रो भृगुनन्दनश्च ।

आसन्नविंशा अपि राजवंश्यास्त्रस्यन्ति याभ्यामरिभीषणाभ्याम्॥(?)

अत्र पूर्वार्धे संक्षिप्तार्थस्योत्तरार्धेन प्रपञ्चनम् ।

'संक्षिप्तार्थाभिधानं यस्सङ्क्षेपः परिकीर्त्यते ।'

यथा—

चिन्तामणिरिति कल्पतरुरिति सुरधेनुरितिच भुवि तावत् ।
वार्ताऽजनि चन्द्रकुले यावन्नोदेति नञ्जभूपालः ॥

अत्र संक्षेपेण वदान्यतातिशयो निरूपितः ।

'सुपां तिङां च व्युत्पत्तिः सौशब्द्यं परिकीर्त्यते ।'

यथा—

सजवबलविशेषसन्तोषिताशेषलोकस्तुतो
हरिरिव करिकूटमुत्कूलदानोद्भटं पाणिजैः ।
शितशरनिकरेण दुर्मेधसां यूथमायोधने
मृदुलकदलकाण्डलावं लुनीतेऽद्य नञ्जप्रभुः ॥

'भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतम् ।'

हर्षभाववशेन प्रवृत्ता वाग्भाविकमित्यर्थः ।

'प्रेयःप्रियतराख्यानं चाटूक्तौ यद्विधीयते ।'

उभयमपि यथा—

नञ्जप्रभो त्वं जनरञ्जनाय श्रियं यशश्चापि चिरं वहस्व ।
वाणि त्वमप्यम्ब मयि प्रसादं प्रदर्शयास्यैव गुणान्प्रवक्तुम् ॥

अत्र वाणि त्वमम्बेत्यत्र भाविकमितरत्र प्रेयः ।

'समाधिरन्यधर्मस्य यदन्यत्राधिरोपणम् ।'

यथा—

वदान्यभावमालोक्य वीरनञ्जमहीपतेः ।
मन्दाक्षेणैव मन्दारो विलीनो वियदङ्कणे ॥

'ध्वनिमत्ता तु गाम्भीर्यं गुणवद्भिर्निरुच्यते ।'

यथा—

मित्रानन्दकरो राजा नञ्जभूपो भयावहैः ।
टङ्कारैरेव धनुषो दिगन्तान् प्रापयत्यरीन् ॥

अत्र मित्रानन्दकरस्य शत्रुभञ्जनमुखेन मित्रमण्डलभेदनमयुक्तमिति दिगन्तान्नयतीति ध्वनिः ।

'उक्तेस्तु परिपाको यः सा प्रौढिरिति कथ्यते ।'

यथा—'कर्णाग्रलोले'त्यादि । [ ४२ प ]

'विदग्धफणितिर्या स्यादुक्तिं तां कवयो विदुः ।'

यथा—

वीरविभुसुकृतराशिर्विश्वाधिकचरणकमलकलहंसः ।
देवविभोरनुजातो दीव्यति ननु कोऽपि वसुमतीविभवः ॥

'यथाप्रक्रमनिर्वाहो रीतिरित्यभिधीयते ।'

यथा—

त्रिदशपतिसदृशविभवस्तिसृषु च शक्तिष्वतीव निष्णातः ।
त्रिषु चावयवेषु दृढस्त्रिभुवनविनुतो विभाति नञ्जविभुः ॥

'यावदर्थपदत्वं तु सम्मितत्वमुदाहृतम् ।'

यथा—

नञ्जराजविपक्षौघदुर्गभ्रमणदुर्दशाम् ।
निरीक्ष्य निर्झरव्याजान्मुञ्चन्त्यश्रूणि पर्वताः ।

एते चतुर्विंशतिगुणा भोजराजादिसम्मताः । तेषां गुणानामर्थगतत्वं केचिदिच्छन्ति । प्राचामाचार्याणां मतेन संघटनाश्रयत्वमेव गुणानाम् । तदुक्त-मलङ्कारसर्वस्वे'संघटनाधर्मत्वेन शब्दार्थधर्मत्वेन गुणानामलङ्काराणाञ्च व्यव-स्थापन'मिति । अनयैव भङ्ग्या गुणालङ्काराणां सुनिरूप्यः स्वरूपभेदः । अन्यथा स्वरूपभेदस्य दुर्निरूप्यत्वापत्तेः । काव्यशोभाकरत्वमेव गुणालङ्कारस्वरूपमुक्तं रुद्रदेवेन—

'यो हेतुः काव्यशोभायाः सोऽलङ्कारो निगद्यते ।
गुणोऽपि तादृशो ज्ञेयो दोषस्यात्तद्विपर्ययः' ॥ इति ॥

अतो गुणानां सङ्घटनाश्रयत्वमेव युक्तम् । एषां मध्ये केषाञ्चिद्दोषपरि-हारत्वेन केषाञ्चित् स्वतएवोत्कर्षहेतुत्वाद्गुणत्वम् । तत्रै ते ( तत्रैते ? ) स्वतएव चारुत्वादिहेतवः । दोषपरिहारहेतूनां गुणत्वं न सर्वैः सम्मतम् । ये तु दोषा-भावतयापि गुणत्वमिच्छन्ति तेषामेव सौकुमार्यादयो गुणत्वेन सम्मताः ।

श्रुतिकटुरूपदोषनिराकरणाय सौकुमार्यं मतम् । ग्राम्यदोषनिराकरणाय कान्तिः स्वीकृता । अपुष्टार्थनिराकरणायार्थव्यक्तिः । न्यूनाधिकपदनिराकरणाय सम्मितत्वम् । अनुचितार्थनिराकरणायोदात्तता । विसन्धिनिराकरणार्थमौर्जित्यम् । पतत्प्रकर्षनिराकरणाय रीतिरिष्टा । क्लिष्टपरिहाराय प्रसादो मतः । अश्लीलपरिहारार्थमुक्तिः स्वीकृता । च्युतसंस्कारपरिहाराय सौशब्द्यमिष्टम् । प्रक्रमभङ्गनिवृत्त्यर्थं समता मता । परुषदोषनिराकरणाय प्रेयो मतम् । एवं यथासम्भवं केषाञ्चिद्दोषपरिहारकत्वेन गुणत्वं वाच्यम् ।

इति परमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादित-
निःसहायदैनन्दिनप्रबन्धनिर्माणसाहसिकनिखिलविद्वज्जनलालनीयसर-
ससाहितीसम्प्रदायप्रवर्तकनरसिंहकविविरचिते नञ्जराज-
यशोभूषणे अलङ्कारशास्त्रे रसनिरूपणं
नाम पञ्चमो विलासः ॥

---

# अथ षष्ठो विलासः

करुणारसकल्लोलकलितापाङ्गवीक्षणम् ।
कन्दर्पजनकं धाम कल्याणानि करोतु नः ॥

अथ निरुक्तरसप्रधानका नाट्यप्रबन्धा निरूप्यन्ते ।

'चतुर्विधैरभिनयैः सात्त्विकाङ्गिकपूर्वकैः ।
धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रयम् ॥
भावाश्रयं तु नृत्यं स्यान्नृत्यं ताललयाश्रयम् ।
मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ॥
लास्यताण्डवभेदेन नाटकाद्युपकारकम् ।'

तेन नाट्येन दश रूपकाणि भवन्ति ।

'नाटकं सप्रकरणं भाणः प्रहसनं डिमः
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश ।' इति ।

रूपयति दर्शयति रसादिकमिति रूपकम् । नाट्याश्रयत्वेन तेषां नाभेदशङ्का ।

'वस्तुनेतृरसास्तेषां रूपकाणां हि भेदकाः ।'
वस्तु च त्रिविधं प्रोक्तं प्रख्यातोत्पाद्यमिश्रत' ।
इतिहासनिबद्धं यत्प्रख्यातं तदुदाहृतम् ।
कविकल्पितमुत्पाद्यं मिश्रं सङ्कीर्णमुच्यते ॥
वस्तुनेतृरसा एव भिन्ना रूपकभेदकाः ।
प्रख्यातमितिवृत्तं स्यात् यत्रोदात्तो हि नायकः ॥
शृङ्गारवीरयोरन्यतरप्राधान्यमुच्यते ।
इतरेषां रसानां स्यादङ्गत्वेन प्रवेशनम् ॥
एतन्नाटकमित्युक्तं नाट्यशास्त्रविशारदैः ।

तदुक्तम्—

'प्रख्यातवस्तुविषयं सर्ववृत्तिरसाश्रयम् ।
शृङ्गारवीरयोरन्यतरप्राधान्यशोधितम् ॥
प्रकृत्यवस्थासन्ध्यङ्गं पताकास्थानकादिमत् ।
तन्नायकस्तु विज्ञेयः शृङ्गारी वाऽथ वीर्यवान् ॥'

तयोर्लक्षणम्—

स्थिरानुरागः सुभगः कलाभिज्ञो विलासवान् ।
चतुरः कामतन्त्रेषु शृङ्गाररसनायकः ॥
नेता वीरश्च विक्रान्तस्तेजोगाम्भीर्यमानवान् ।
सततं युद्धसन्नद्धो वीरनायक उच्यते ॥

प्रोक्तं प्रकरणे वृत्तमुत्पाद्यं धीरशान्तकः ।
नेता रसस्य प्राधान्यं शृङ्गारस्यैव सम्मतम् ॥

तन्नायकलक्षणमुक्तम् [ प्राक् ६ प ]

भाणे धूर्तविटः प्रोक्तो नेता शृङ्गारवीरयोः ।
सूचनामात्रसारत्वं वृत्तमुत्पाद्यमुच्यते ॥
कल्प्यं प्रहसने कल्प्यं वृत्तं हास्यरसो मतः ।
पाषण्डतापसप्रख्या नायकाः परिकीर्तिताः ॥

तन्नायकस्तु—

चाञ्चल्यवान् पुरोभागी हर्षासूयाविवर्धनः ।
परिहासक्रियादक्षो वागीशो हास्यनायकः ॥

डिमे प्रख्यातवृत्तं स्याद्देवगन्धर्वराक्षसाः ।
नेतारः स्युः पिशाचाद्याः षोडशैव प्रकीर्तिताः ॥
वीरनाम्नो रसस्यैव प्राधान्यं परिकीर्त्यते ।

तन्नायकलक्षणमुक्तम् [ ७९ ]

हास्यशृङ्गारयोश्चानुप्रवेशः कथितो बुधैः ।
प्रख्यातमितिवृत्तं स्यान्नेता धीरोद्धतो रसः ॥
वीरः प्रधानो व्यायोगे कथितः सर्वसम्मतः ।

तन्नायकश्चोक्तः [ प्राक् ६ प ]

प्रोक्तं समवकारे तु वृत्तं कल्पितमिष्यते ।
नेतारो देवदैत्याद्याः द्वादशैवोपयोगिनः ॥
वीरो रसः प्रधानः स्यात्प्रख्यातं वस्तु वा भवेत् ।
वीथ्यां धूर्तविटो नेता कल्पितं वस्तु युज्यते ॥
रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ।
अङ्के प्रख्यातवृत्तं स्याद्रसस्तु करुणो मतः ।
नेतारः प्राकृता मर्त्याः कथ्यन्ते नाट्यवेदिभिः ॥

तन्नायकस्तु—

चिन्तादैन्यश्रमापन्नो जडचित्तोऽप्रतापवान् ।
विस्मृतः प्राप्तनिर्वेदो योऽसौ करुणनायकः ॥

†प्रसङ्गात् सर्वनायकाः कथ्यन्ते—

हर्षामर्षान्वितः सर्वदुर्वारो गर्वदुर्वहः ।
चलचित्तो महोत्साहः कथ्यते रौद्रनायकः ॥
अव्यक्तवचनो दीनो मोहदाहत्वरान्वितः ।
स्वेदवेपथुसंयुक्तः स्याद्भयानकनायकः ॥
मधुमांसविलिप्ताङ्गो भयापस्मारभाववान् ।
[1]लोलाभि(वि ?) लो न्म(म?) दोन्मत्तो बीभत्सरसनायकः ।
जितेन्द्रियो जितक्रोधः संयुक्तः सात्विकादिभिः ॥

† क्रमप्राप्तस्येहामृगस्य निर्देशोऽत्र विगलितः । १ लोलो OL.

सदानन्दः सत्ववेदी धीरोऽसौ शान्तनायकः।
एषु च द्विविधौ प्रोक्तौ नायकप्रतिनायकौ॥
किञ्चिदूनगुणो दुःखी प्रियस्तस्योपनायकः।

यथा सुग्रीवादयः।

व्यसनी पापकृद्द्वेष्यो नेता स्यात्प्रतिनायकः।

यथा रावणादयः।

प्रख्यातमेवेतिवृत्तं नाटके विनियोजयेत्।
आरम्भ–यत्न–प्राप्त्याशा–नियताप्ति–फलागमाः।
अर्थावस्था इति प्रोक्ताः पञ्चैता वृत्तवेदिभिः॥

अथ प्रकृतिपञ्चकम्—

'बीजबिन्दुपताकाख्याः प्रकरीकार्यलक्षणाः।
अर्थप्रकृतयः पञ्च'

सन्धिलक्षणमाह—

एषां द्वन्द्वे यथाक्रमम्
प्रकृत्यवस्थे मिलिते सन्धिरित्युच्यते बुधैः॥
एककार्यान्वितानां तु कथांशानां प्रकीर्तिताः।
अवान्तरार्थसम्बन्धः सन्धिस्ते पञ्चधेरितः॥

सन्धिं विभजते—

मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः।
यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः॥
आरम्भबीजयोः सन्धिर्मुखसन्धिरितीर्यते।
बीजप्रयत्नयोः सन्धिरुक्तः प्रतिमुखाह्वयः॥
उक्तः पताकाप्राप्त्याशायोगः स्याद्गर्भसन्धिकः।
प्रकरीनियताप्त्योस्तु विमर्शः सन्धिरन्वयः॥
कार्यस्य च फलप्राप्तेः सन्धिर्निर्वहणो मतः।

निर्वहणोपसंहृतिशब्दौ पर्यायौ। अर्थप्रकृतयश्चोदाहरणप्रदर्शनसमय एव निरूप्यन्ते।

मुखसन्धिस्वरूपमाह—

'मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा ।'

तस्याङ्गानि सूचयति—

'अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ।
उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥
युक्तिः प्राप्तिः समाधानं निधानं परिभावनम् ।
उद्भेदभेदकरणानीति द्वादश योजयेत् ॥'

तेषां स्वरूपमग्रे वक्ष्यते ।

प्रतिमुखसन्धिमाह—

'लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् ।
बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥'

यथा—

'विलासः परिसर्पश्च विधूतं शमनर्मणी ।
नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् ॥
वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ।'

गर्भसन्धिमाह—

'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
द्वादशाङ्गः पताका स्यान्नवा प्राप्तेस्तु सम्भवः ।'

प्राप्तिः–प्राप्त्याशा ।

'अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
सङ्ग्रहश्चानुमानं च तोटकाधिबले तथा ॥
उद्वेगसम्भ्रमाक्षेपाः द्वादशाङ्गान्यनुक्रमात् ।'

एषां स्वरूपमग्रे वक्ष्यते ।

विमर्शसन्धिमाह—

'गर्भसन्धौ प्रसिद्धस्य बीजस्यार्थावमर्शनम् ।
हेतुना येन केनापि विमर्शः सन्धिरिष्यते ॥
प्रकरीनियताप्त्युक्तेरङ्गान्यस्य त्रयोदश ।
अथापवादसंफेटौ विद्रवद्रवशक्तयः ॥

द्युतिः प्रसङ्गश्छलनम् व्यवसायो निरोधनम्।
प्ररोचना विचलनमादानं च त्रयोदश ॥'

निर्वहणसन्धिमाह—

'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र निर्वहणं मतम् ॥'

मुखाद्यर्था इति। मुखसन्ध्यादीनामर्था इत्यर्थः।

चतुर्दशाङ्गान्यस्यैव कार्येच्छागमयोगतः।
'सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम्।
प्रसादानन्दसमयाः कृतिर्भाषोपगूहनम् ॥
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश।'

तल्लक्षणान्यग्रे वक्ष्यन्ते।

एषां निर्देशवैषम्यं क्रमाणामविवक्षया।

एषाम्—उपक्षेपादीनां युक्त्युद्भेदसमाधानोपक्षेपाणां प्रकीर्तितम्।
परिन्यासस्य च तथा तथा परिकरस्य च।
आवश्यकत्वमेतेषामङ्गानामाद्यसन्धिका ॥
यथासम्भवमन्येषां प्रयोगः कविसम्मतः।
प्रतिमुखसन्धौ प्रगमनवज्रोपन्यासपुष्पाणाम्।
परिसर्पस्य च कथयन्त्यावश्यकभावमभियुक्ताः ॥
अभूताहरणं मार्गस्तोटकोदाहृतिस्तथा।
आक्षेपाधिबले चेति प्रोक्तान्यङ्गानि सूरिभिः ॥
आवश्यकानि सन्धौ तु गर्भाख्ये नाट्यवेदिभिः।
विमर्शसन्धावादानव्यवसायप्ररोचनाः।
शक्तिश्चावश्यकान्येतान्यङ्गानि कथितानि हि ॥
चतुर्दशापि युक्तानि सन्धौ निर्वहणाह्वये।
अङ्गानां रूपके केऽपि क्रमं नेच्छन्ति सूरयः ॥
इति तस्य महार्हस्य नाटकस्य महात्मभिः।
चतुष्षष्ठ्यङ्गसहिताः कीर्तिताः पञ्च सन्धयः ॥

प्रयोजननानि षडेषां भवन्त्यङ्गानाम्—विवक्षितार्थप्रतिपादनम्, प्रका-

श्यार्थप्रकाशनम् , अभिनयरागसमृद्धिः, चमत्कारकारित्वम् , इतिवृत्तविस्तर-श्चेति । इतिवृत्तं वस्तु ।

नाटके द्विविधं वस्तु सूच्यासूच्यप्रभेदतः ।
रसहीनं भवेद्यत्तु तत्सूच्यमिति कथ्यते ॥
यदस्ति नीरसं तत्तु सूचयेत्सूचकास्त्वमी ।

तत्र—

सूच्यस्य सूचनोपायाः पञ्चधा परिकीर्तिताः ।
विष्कम्भचूलिकाङ्कस्याङ्कावतारप्रवेशकाः ॥
नात्यक्रमविवक्षास्ते यथासंभवमीरिताः ।
अमुख्यपात्ररचितः सङ्क्षेपैकप्रयोजकः ।
स शुद्धो मिश्र इत्युक्तो मिश्रः स्यान्नतु मध्यमैः ॥
सोऽयं चेटीनटाचार्यसल्लापः परिकीर्तितः ।
शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा ॥
शुद्धस्तु संस्कृतप्रायः मिश्रं प्राकृतमिश्रतः ।

अथ चूलिका—

वन्दिमागधसूताद्यैः प्रतिसीरान्तरस्थितैः ।
अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ॥

चूलिका खण्डयुक्ता स्यात् द्विविधा परिकीर्त्यते

खण्डयुक्ता—खण्डचूलिकेत्यर्थः ।

पात्रैर्यवनिकासंस्थैः केवलं या तु निर्मिता ।
आदावङ्कस्य मध्ये च चूलिका परिकीर्तिता ॥
प्रवेशनिर्गमाभावादियमङ्कात् बहिर्गता ।
रङ्गनेपथ्यसंस्थायिपात्रसल्लापविस्तरैः[1] ।
आदौ केवलमङ्कस्य कल्पिता खण्डचूलिका ॥
प्रवेशनिर्गमाप्राप्तेरियमङ्कात् बहिर्गता ।

अङ्कास्यम्—

पूर्वाङ्कार्थे संप्रविष्टैरुत्तराङ्कार्थसूचनम् ।

१ रङ्गेत्यादेः सार्धश्लोकस्य पाठः OL. पुस्तके दृश्यते ।

अविभागेन सर्वेषां भाविन्यङ्के प्रवेशनम् ॥
पात्रेणाङ्कं प्रविष्टेन केवलं सूचितत्वतः ।
भवेदङ्कादबाह्यत्वमङ्कास्याङ्कावतारयोः ॥

अङ्कावतरणम्—

'यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसङ्गतः ।
असूचिताङ्कपात्रं तदङ्कावतरणं मतम् ॥'

प्रवेशकः—

यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचना ।
अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः ॥

अथासूच्यम्—

असूच्यं तु शुभोदात्तरसभावनिरन्तरम् ।
असूच्यं तद्विधा दृश्यं श्राव्यं चाद्यं तु दर्शयेत् ॥
द्विधा द्वितीयं स्वगतं प्रकाशं चेति भेदतः ।
सर्वप्रकाशं सर्वेषां स्थितानां श्रवणोचितम् ॥
त्रिधा जनान्तमपवारितमाकाशभाषितम् ।
'त्रिपताकाकरेण स्यादपवार्यान्तरा कथाम् ॥
अन्यस्या(न्योन्या)मन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ।
रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् ॥
किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकः तत्र ह्याकाशभाषितम् ॥'
सूच्यं तु सूचयित्वैवं दृश्यमङ्कैः प्रदर्शयेत् ।

अङ्कस्वरूपं निरूप्यते—

'प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥
प्रयुक्तैः पञ्चषैः पात्रैस्तेषामन्ते च निर्गमः ।'

अथ तदङ्गमामुखं निरूप्यते—

'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।

स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥
प्रस्तावना वा तत्र स्यात्कथोद्घातः प्रवर्तकम् ।
प्रयोगातिशयश्चेति त्रीण्यङ्गान्यामुखस्य हि ॥'

सूत्रधारलक्षणं च—

'आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इतीरितः ॥'

नटीलक्षणम्—

'चतुरातोद्यभेदज्ञा तत्कलासु विशारदा ।
करणाभिनयज्ञा च सर्वभाषाविचक्षणा ॥
नटानुयोक्त्री नृत्येषु नटस्य गृहिणी नटी ।

मारिषः पारिपार्श्वकः, तल्लक्षणं तु—

'भरतेनाभिनीतं यो भावं नानारसाश्रयम् ।
परिष्करोति पार्श्वस्थः स भवेत्पारिपार्श्वकः ॥'

विदूषकलक्षणम्—

'तदात्वप्रतिभो नर्मचतुर्भाव(भेद)प्रयोगवित् ।
वेदविन्नर्मवादी यो नेतुः स स्याद्विदूषकः ॥'

सूत्रधारकार्यमाह—

निवेशनं प्रयोज्यस्य निर्देशो देशकालयोः ।
काव्यार्थसूचकैः सूक्तैः सभायाश्चित्तरञ्जनम् ॥
कविकाव्यनटादीनां प्रशंसा तु प्ररोचना ।

आमुखाङ्गत्रयं निरूप्यते—

'स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशत्पात्रं कथोद्घातो द्विधैव सः ॥
प्रस्तूयमानकालस्य गुणवर्णनया स्वतः ।
प्रविशेत् सूचितं पात्रं यत्र तत्स्यात्प्रवर्तकम् ।
एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ॥

पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ।'

†नटादीनां स्थलस्वरूपम्—

कुशीलवकुटुम्बस्य स्थली नेपथ्यमुच्यते ।
नेपथ्यजं तु नैपथ्यं तच्चतुर्विधमुच्यते ॥
पुस्तभूषाङ्गरचनासञ्जीवा इति भेदतः ।
पुस्तं प्रदर्शितं नाट्ये विमानाद्रिवनादिकम् ॥
कुण्डलादि सुभूषाऽङ्गरचना त्वनुलेपनम् ।
सञ्जीवः पशुपक्ष्यादिप्राणिनां रूपधारणम् ॥
'वीथ्यङ्गान्यामुखाङ्गत्वात्कथ्यन्तेऽत्र स्वरूपतः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥
वाक्केल्यधिबलं गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥'
तेषां न्यासो विवक्षातः संमतो लास्यवेदिनाम् ।

तेषां मध्ये यथासंभवं कानिचित्प्रस्तावनायां प्रयोज्यानि ।

प्रस्तावनाङ्गध्रुवानान्दीस्वरूपं निरूप्यते ।

सूचनी पात्रभेदानां रसभावप्रकाशिनी ।
या गीतिः सा ध्रुवा तुल्यसंविधानविशेषणा ॥

तुल्यसंविधाना तुल्यविशेषणा चेत्यर्थः ।

नान्दीलक्षणमाह—

प्रारम्भे सर्वनाट्यानां नान्दी कार्या शुभावहा ।
आशीर्नमस्क्रियावस्तुनिर्देशान्यतमात्मिका ॥
अर्थतश्शब्दतो वाऽपि मनाक्काव्यार्थसूचिका ।
चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ॥
शङ्खचक्रसिताम्भोजकोककैरवशंसिनी ।
यथैव चन्द्रसंबन्धो लक्ष्यते व्यज्यतेऽपि वा ॥

---

† नटादीनां स्थलस्वरूपमित्यादेः प्राणिनां रूपधारणमित्यन्तस्य ग्रन्थस्य आमुखाङ्गत्रयं निरूप्यत इत्यस्य प्राक् पाठः समुचितः, आमुखाङ्गनिरूपणप्रकरणेऽत्र तु न सङ्गत इति प्रतिभाति ।

नान्दीश्लोके तथा यत्नः कर्तव्यः कविभिः सदा ।
'यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ॥
द्वाविंशत्या पदैर्वाऽपि सा नान्दी परिकीर्त्यते ।'

महावीरचरिते अष्टपदा नान्दी । उत्तररामचरिते द्वादशपदा नान्दी । बालरामायणे द्वाविंशतिपदा नान्दी । एवमष्टादशपदाऽपि द्रष्टव्या ।

केचित्तु नाम(भि?)मन्यन्ते पदानां नियमं बुधाः ।
यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ॥
तेषामवश्यकर्तव्या नान्दी नन्दीश्वरप्रिया ।

पूर्वरङ्गस्वरूपञ्च—

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥'

नान्द्यन्ते कर्तव्यमाह—

रङ्गं प्रसाद्य मधुरैर्वाक्यैः काव्यार्थसूचकैः ।
निरुक्तपदनान्दीभिः सूत्रधारे विनिर्गते ॥
प्रविश्य तद्वदपरः ततः पञ्चपदीं व्रजेत् ।
ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥
नाटकस्यैव मुख्यैषा प्रक्रियेति बुधा जगुः ।
प्रसन्नपदगम्भीरसंस्कृतेनैव योजिता ।
भारती वृत्तिरिति तां विदुर्नाट्यविशारदाः ॥

अथ नाटके वर्ज्यानि—

'दूराध्वानं तथा युद्धं राज्यदेशाद्युपद्रवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।'

तदुपयुक्तानां षण्णां भाषाणामपि विनियोगः—

पाठ्यन्तु संस्कृतं नृणामनीचानां महात्मनाम् ।
स्त्रीविदूषकशूद्राणां नियतं प्राकृतं वचः ॥

एवं भाषापञ्चकस्यापि विनियोगो द्रष्टव्यः

अथदशरूपकविवरणम्—

'साङ्गैर्मुखप्रतिमुखगर्भमर्शोपसंहृतैः ।

पूर्णं प्रकृतिरन्येषामाधिकारिकवृत्तिमत् ॥
वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते ।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥'

अथ प्रकरणम्—

'उत्पाद्येनेतिवृत्तेन धीरशान्तप्रधानकम् ।
शेषं नाटकतुल्याङ्गं भवेत्प्रकरणं हि तत् ॥'

अथ भाणम्—

'भारतीवृत्तिभूयिष्ठं शौर्यसौभाग्यसंस्तवैः ।
सूच्यते वीरशृङ्गारौ विटेन निपुणोक्तिना ॥
कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम् ।
एकोऽङ्को मुखनिर्वाहौ यत्र भाणः स सम्मतः ॥'

अथ प्रहसनम्—

'यत्र सन्ध्यङ्गवृत्त्यङ्गवर्णनं भाणवन्मतम् ।
हास्यो रसः प्रधानं स्याद्भवेत्प्रहसनं हि तत् ॥
सङ्कीर्णं वैकृतं शुद्धमिति तत्त्रिविधं मतम् ।
यद्वीथ्यङ्गैः समाकीर्णं सङ्कीर्णं धूर्तसंकुलम् ॥
कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ।
प्रवासाभिनयप्रायं विकृतं तत्प्रकीर्त्यते ॥
पाषण्डविप्रप्रकृति चेटीचेटविटाकुलम् ।
वेषभाषादिसहितं शुद्धं हास्यवचोन्वितम् ॥'

अथ डिमः—

'यत्र वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ।
नेतारो देवगन्धर्वा यक्षरक्षोमहोरगाः ॥
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।
हास्यशृङ्गाररहिता रसा रौद्रप्रधानकाः ।
चत्वारोऽङ्काः सन्धयश्च चत्वारो मर्शवर्जिताः ।
महेन्द्रजालसङ्ग्रामसूर्यचन्द्रग्रहादयः ॥

शेषं नाटकवत्सर्वं स डिमः परिकीर्तितः ।'

अथ व्यायोगः—

'यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः ।
गर्भावमर्शसाजा(राहि)त्यं डिमवद्रसपोषणम् ॥
एकवासरकार्यश्च स व्यायोगो महारणः ॥'

अथ समवकारः—

'यत्रामुखं नाटकवत् सन्धयो मर्शवर्जिताः ।
नेतारो द्वादश पृथक्फला देवासुरादयः ॥
वीरप्रधानाश्च रसास्त्रयोऽङ्काः त्रिषु च क्रमात् ।
वस्तुस्वभावदैवादिकृताः स्युः कपटास्त्रयः ॥
पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः ।
धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः ॥
प्रथमेऽङ्के निबद्धव्या कथा यामत्रयावधिः ।
यामावधिर्द्वितीयेऽङ्के तृतीयेऽङ्केऽर्धयामिका ॥
असौ समवकारः स्याद्वीथ्यङ्गैः कैश्चिदन्वितः ।'

अथ वीथी—

'यत्र भाणवदङ्गानां क्लृप्तिर्वृत्तिस्तु कैशिकी ।
शृङ्गारः परिपूर्णत्वात् सूचनीयोऽतिभूयसा ॥
उद्धात्यादीनि चाङ्गानि सा वीथिरिति सम्मता ।'

[अथाङ्कः]

'यत्रेतिवृत्तं प्रख्यातं प्रधानं करुणो रसः ॥
स्त्रीणां विलापो वाग्युद्धं नेतारः प्राकृता जनाः ।
भाणवत्सन्धिवृत्त्यादि स उत्सृष्टाङ्कसंज्ञितः ॥'

अथेहामृगः—

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ॥
धीरोद्धतौ स्त्रियं दिव्यां हर्तुकामौ च कामुकीम् ।
अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥'

प्रक्रियेयं हि सकला कथिता दशरूपके ।

अथ साङ्गं नाटकमुदाहरणरूपेण प्रस्तूयते—

पार्वत्याः प्रणयप्रसन्नमनसः प्रीतिं प्रसूतेतरां
देवो यः श्वशुरैकमित्रमचलं चापात्मना मानयन् ।
धत्ते चन्द्रकलानुरञ्जनधिया सिन्धुं निषङ्गञ्च वः
सः श्रीकान्तशरः शुभाय भवतूत्तुङ्गाय गङ्गाधरः ॥

एषा द्वाविंशतिपदा नान्दी—

नान्द्यन्ते सूत्रधारः—सप्रश्रयम्—

पशुपतिनाऽपि गृहीतां तां तां ताण्डवलास्यप्रभेदेन ।
नूतनकलां प्रथयन्तः कोहलमुख्या जयन्तु मुनिवर्याः ॥

इति पुष्पाञ्जलिं विकीर्य पञ्चषट्पदानि गत्वा—

(नेपथ्याभिमुखमवलोक्य) मारिष इतस्तावत् ।

(प्रविश्य) पारिपार्श्वकः–भाव एऽषोस्मि ।

सूत्रधारः—मारिष, वृत्तसामग्री सद्य एव सज्जीक्रियत इति ससम्भ्रमं साधयता जनेन कथमचिरेण समागतमासीत् ।

एतत्प्रियसदृशैः वाक्यैरप्रियोपलम्भनाच्छलनं नाम प्रस्तावनाङ्गम् ।

'प्रियाहैंरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम् ।'

पारिपार्श्वकः—सविनयभयसंभ्रमम्, भाव कनिष्ठोपाध्यायस्य त्वद्भागिनेयस्य रसिकरञ्जनस्य नगरान्तरं प्रतीतोपि प्रथीयसीं प्रख्यां संपादयितुं विजयप्रस्थानकौतकमभूत्, अतस्तदनुप्रेषणार्थमियान्विलम्बः । अद्य पुनः सर्वं सज्जं, पश्य ।

इयं ध्रुवां गायति काऽपि वीणामसौ समालापयति प्रवीणा ।
अयं समं मद्दलधिङ्क्रियाद्यैरास्फालयत्यत्र हि कांस्यतालौ ॥

इदं रङ्गप्रसाधनम् ।

सूत्र० (सहर्षम्) साधु मारिष साधु, रसिकरञ्जनस्यानुप्रेषणं नाम मद्नियुक्तमप्यर्थमावश्यकमचरता भवता सत्यापित एव 'अनुक्तमप्यूहति पण्डितो जन' इति लोकवादः । मम पुनरनेकसुकृतपरिपाकसमुदितानाम् अखिलसुरासुरप्रपञ्चपाञ्चालिकानटनसूत्रधारस्य आजन्मशुद्धरत्नरञ्जितवरिष्णुहारलतालङ्कारस्य सकलभुवनानुजिघृक्षया परिगृहीतवसुधावलयनिवासस्य

निजमकुटचन्द्रिकाकिरणनिरन्तरनिर्निद्राणभवनारामकुमुदिनीविलसदुत्पलपुट-निरर्गलविनिर्गलदमन्दमकरन्दनिष्यन्दकुल्यासहस्रनिपातनितान्तमधुरिममेदुर-सलिलकपिलातटविलासविविधविभवसरलगरलनगराभरणायमानस्य भगवतो गरलपुरीश्वरस्य वसन्तोत्सवे ससन्तोषमशेषदिगन्तोपसेदुषाममीषां रसिक-विदुषामभिलषितसम्पादन एव विगलितवेद्यान्तरं किमपि कुतूहलम्।

पारि०—कुलव्रतं हि नामैतद्भावस्य यदहर्निशं सति कार्यसहस्रेऽपि सतामेवानुरञ्जनम्।

एतन्मिथः स्तोत्रं प्रपञ्चो नामाङ्गम्।

'असद्भूतं मिथः स्तोत्रं प्रपञ्चः परिकीर्त्यते।'

भवतु कथ(त ?)मस्मिन्नेषामभिलाषः।

सूत्र०—रूपकं विलोकनीयमिति।

पारि०—रूपकाणामनेकतया न खल्ववगच्छामि कीदृशं तत्।

सूत्र०—प्रौढैरगूढार्थरसानुबन्धैर्गिरां क्रमैरद्भुतसंविधानैः।

रम्येतिवृत्तैरपि विस्मयानामुद्घाटकं नाटकमेव नव्यम्॥

पारि०—अहो प्रबन्धस्य नूतनता, तादृग्गुणवत्ता च, किं नाम तत्?।

सूत्र०—प्राज्ञ त्वमेव कथय।

का नाम मूर्ध्ना विदधे हरेण किं वा मनो रञ्जयते जनानाम्।

पारि०—किञ्चिद्विमृश्य—आः परिज्ञात एव भावस्य प्रश्नद्वयसमुदायार्थः, चन्द्रकलाकल्याणमिति।

एषा निगूढार्था नालिका—

'प्रहेलिकात्मा गूढार्था नालिका परिकीर्त्यते।'

भवतु कस्य विदुषो वदनारविन्दमकरन्दायमानोऽयमभिनवसूक्तिनि-ष्यन्दः।

एतद्वाक्याधिक्यमधिबलम्—

'अन्योन्यवाक्याधिक्योक्तिः कथ्यतेऽधिबलं बुधैः।'

सूत्र०—(विहस्य)

कविं तमेनं त्रिजगत्प्रकाशं रविं च जानाति जनो न को वा

तर्हि शृणु

स जयतु नरसिंह्मकविर्यत्कवितास्वादमुदितहृदयस्य।

अधरामृतमपि सुदृशामादरपदमीषदपि न सन्तनुते॥

पारि०—आः स एव यः किलाभिनवपरमशिवावतारस्य शिवरामसुधीमणेस्तनयः शास्त्रसाहित्ययोरपि नितान्तनिष्णात इति प्रथितः, यत्र खल्वयं प्रौढकवीनां द्राक्षाक्षौद्रयोरुक्तिप्रत्युक्तिरूपो वाग्विलासः ।

सूत्रधारः—कथमिव ।

पारिपार्श्वकः—

द्राक्षे किं वलसे वने वद ननु क्षौद्र त्वमप्यत्र किं
लज्जेऽहं नरसिंहसूरिकवितामाधुर्यतः साऽप्यहम् ।
मित्रं नः क मरन्द एष कमले त्रिस्रोतसस्तत्कथं
तद्वाग्वेगजितेव साऽपि गगने लीनेति हि श्रूयते ॥

एषा प्रश्नोत्तररूपा वाक्केलिः ।

वाक्केलिः कथ्यते प्राज्ञैरुक्तिप्रत्युक्तिरूपिणी ।

सूत्र०—अये किमिदं विस्मृतं भवता, यत्किल कृतिनायकसमक्षमेव वर्णितं सकलकलाकुशलमतिना सरसकविचक्रवर्तिना काशीपतिसुधीमणिना ।

पारि०—कथं विस्मर्यते, इदं हि—

श्रीनञ्जराजो नवभोजराजो नृसिंहसूरिर्नवकालिदासः ।
परस्परान्तस्थितभावरीतिर्विज्ञायते येन परस्पराभ्याम् ॥ इति ॥

सूत्र०—तत्कविसमक्षमेव कृतिनायकेन कलुलेकुलचिरन्तनसुकृतपरिपाकेन स्वकपोलकल्पितसङ्गीतगङ्गाधराद्यनेकप्रबन्धाभिनयदर्शनजनितकौतुकेन कर्णाटकभाषाविरचितहालास्यचरितशिवभक्तविलासादिबहुविधप्रबन्धसमुदयेन सकलविद्वज्जनभागधेयेन नूतनभोजराजेन नञ्जराजेन सबहुमानाहूतः समादिष्टोऽस्मि सरसकवीनां पुरतोगणनीयस्यास्य सैनगर(?)कुलेन्दोर्नरसिंहाभिधविदुषः कृतिरियमभिनीय दर्शनीयेति ।

पारि०—अहो प्रभुरपि प्रबन्धनिर्मातेत्यदृष्टचरं सङ्गतं श्रीसरस्वत्योः

सूत्र०—अये सार्वजनीनी खल्वियं प्रश्नोत्तरोक्तिः ।

विरुद्धयोः श्रीभारत्योरेकत्र घटनं कुतः ।
वैदग्ध्यात्तत्तु तस्यैव कलुलेनञ्जभूपतेः ॥ इति ॥

इत्येतदुद्घात्यकम्

'गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा ।

---

१ सगर CL.

यत्रान्योन्यसमालापो द्विधोद्घात्यं तदुच्यते ॥'

पारि०—( सप्रमोदम् ) चिराय[1] मर्त्यवस्तुषु महापुरुषचरितमभिनेष्यत इत्यलङ्कृतमस्मन्नृत्यपाण्डित्यम् ।

एतत्प्रकृतावलगनाद्वलगितम्

'प्रस्तुतेऽन्यत्र वा यत्स्यात्तच्चावलगितं द्विधा' ॥ इति ॥

किञ्च-सर्वं संघटितमस्मद्भागधेयेन, तथाहि—

सुरभिमुचः कविवाचः सभा च सारल्यरञ्जितप्रतिभा ।
प्रथितं नृत्तकलासु प्रागल्भ्यं किमपि चास्माकम् ॥

सूत्र—तर्हि भवानेव मद्गृहिणी ।

एतद्वशोधि(दि ?)तं ख(ग ?)ण्डम् ।

यद्प्रकृतवेगोक्तं ख(ग ?)ण्डं तदिति कीर्त्यते ।

पारि०—( विहस्य ) नहि नहि सा पुनर्यवनिकायां ध्रुवां गायति । अहं पुनरेको नटोऽस्मि ।

सूत्र०—अरे श्रोतव्यशेषं न शृणोषि । तर्हि भवानेव मद्गृहिणीसोदरेण रङ्गतरङ्गेण कृत(ति ?)नायिकायाश्चन्द्रकलायाः भूमिकां परिग्राहयत्विति ।

एतद्गण्डस्य समर्थनाद्वस्यन्दितम् ।

'यथोक्तस्यान्यथा व्याख्या यत्रावस्यन्दितं हि तत् ।'

पारि०—अथ भाव एव परिजिघृक्षति वर्णिकां वल्लभस्य ।

एतत्परिहासात्मा व्याहारो नामाङ्गम्

'अन्यार्थमेव व्याहारो हास्यलोभकरं वचः ।'

सूत्र०—प्रागेव नियुक्तस्तत्र मदनुजन्मा विलासशेखरः ।

( नेपथ्ये कर्णं दत्त्वा )

किंवा केलिशुकालापः किं वा कोकिलनिस्वनः ।
किं शारिकामृदुरवः किमेतदवकर्ण्यते ॥

एतदनेकार्थयोजनं त्रिगतं नामाङ्गम् ।

'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम् ।'

पारि०—भाव प्रागेव कथितं खल्वार्या ध्रुवां गायतीति ।

१ तर्हि चिराय CL.

सूत्र०—हर्षपरवशस्तर्हि विस्तृतेनैव चक्षुषा शृणोमि ।

एतदसत्प्रलापोनामाङ्गम् ।

'असम्बन्धकथाप्रायोऽसत्प्रलापो यथोत्तरः ।'

पारि०—भाव—

कान्तेव कोमलगुणा सरसालङ्काररञ्जिताऽप्येषा ।
गीतिः कर्णरसायनमथ कथमेनां तु चक्षुषा पिबसि ॥

सूत्र०—अरे रसानुभावस्य दवीयानसि ।

सुखविस्तारितदृशो निश्चलभ्रूलता जनाः ।
यामाकर्ण्यैव नन्दन्ति गीतिं तां रसिका विदुः ॥

एतद्दोषस्य गुणत्वारोपणं मृदवं नामाङ्गम् ।

'दोषा गुणा गुणा दोषा यत्र स्यान्मृदवं मतम् ।'

भवतु गीतार्थमवधास्यामि । नेपथ्ये गीयते ।

मअणस्स भुवणजइणो विहुणो विअअं दिअन्देसु ।
गाइस्सन्दो दाणिं अलिनो अहिअंति कुरवअवणन्तम् ।

सूत्र०—अये ज्ञातं वसन्तसमयमधिकृत्य प्रवर्तमाना कयोश्चिद्वैदेशिकयोर्वन्दिनोः प्रावेशिकी ध्रुवेयम् ।

नेपथ्ये—साधु भणितम् ।

एतत्सूत्रधारोक्तार्थानुसरणात्कथोद्धातो नामाङ्गम् ।

सूत्र०—नेपथ्याभिमुखमवलोक्य, आः समागतावेव वन्दिनौ । तथाहि—

कर्णाग्रप्रविलम्बिचञ्चलबृहन्मुक्ताफलश्रीभर-
व्यालिङ्गैककपोलगर्भविलसत्ताम्बूलखण्डोत्करैः ।
स्वर्णोष्णीषविराजितोरुशिरसौ कौसुम्भसंव्यानिना-
वेतावायतखड्गराजितभुजावग्रे समागच्छतः ॥

अयं प्रयोगातिशयः ।

तदनयोरवनिपतिसभां प्रविशतोरभिनवभोगावलीनिशामनेन श्रवणानन्दमनुभवावः ( इति निष्क्रान्तौ )

## प्रस्तावना

( छा ) मदनस्य भुवनजयिनो विभोर्विजयं दिगन्तेषु । गास्यन्त इदानीं अलिनोऽभियान्ति कुरवकवनान्तम् ।

'श्रुतेर्यथैव प्रणवो मुखतां प्रतिपद्यते।
प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥'

ततः प्रविशतो बन्दिनौ।

एकः—सखे नैषध, निषधमगधदेशाभ्यामागतावावामधुना कतमस्मिन्वसुधावलये वर्तावहे।

अन्यः—सखे मागध, महीशूरमण्डलमण्डनायमानककुद्गिरिपरिसर एव।

प्रथमः—( सौत्सुक्यम् ) तर्ह्यचिरेण।

यस्य प्रतिक्षणविशेषफलप्रदान-
चिन्तामणिः परशिवे दृढभक्तिरास्ते।
स्निह्यन्ति यत्र सुगुणाः स च नञ्जभूपो
दिष्ट्याऽऽवयोर्नयनकौतुकमादधीत॥

तत्र प्रतिक्षणविशेषफलेत्यनेन बीजभूतस्य कस्य चिदर्थस्योपक्षेपादुपक्षेपः।

'उपक्षेपस्तु गूढस्य बीजस्य न्यास इष्यते।'

द्वितीयः—सखे मागध, सत्यमुक्तं 'प्रतिक्षणविशेषफलप्रदानचिन्तामणिः शिवभक्तिरस्ये'ति। अत एवाकर्णितमर्धपद(थ?)एव मया किमपि कौतुकम्।

नैषधः—कथमिव

मागधः—शृणु—

सामाद्युपायैः स्ववशोपनीतं राज्यं समग्रं सचिवे निधाय।
चूडेश्वरं नूतनपुर्यधीशं प्रणन्तुमागान्नगरान्नरेन्द्रः॥

तत्रहि—

स देवोऽपि महीजानेस्त्रियामासु तिसृष्वपि।'
प्रसादमतनोदेव स्वप्नेष्वेकफलप्रदम्॥

अनेन स्लोकोपक्षिप्तार्थस्य बहूकरणात् परिकरः।

'तद्बहूकरणं वाक्यैरुक्तः परिकरो बुधैः'। इति

नैषधः—अहो तिसृष्वपि रजनीषु संवादः स्वप्नानाम्, अहो वत्सलता च देवस्य।

मागधः—ततश्च ।

स्वेनैव निश्चितफलं स्वप्नं कथयन्निजाप्तवर्याय ।
विस्मयपरवशमनसा प्रशंसितस्तेन नन्दति नरेन्द्रः ॥

नैषधः—स्थाने सुस्वप्नस्यान्यत्र सङ्क्रमणमभ्युदयाय, [अपि] विज्ञायते स्वप्नरहस्यम् ?

मागधः—

अभिनवयवनव्याङ्कुरनद्धान्तराल-
च्छ(स्थ)ल[ज]कमलकम्रां काञ्चिदम्लानमालाम् ।
अतिशबलित (अदिशादलिक ?) नेत्रो नञ्जभूपालमौले-
रखिलभुवनरक्षास्वैरसज्जे कराब्जे ॥

अनेनोपक्षिप्तार्थस्यान्यत्र न्यासात् परिन्यासः ।

'बीजनिष्पत्तिकथनं परिन्यास इतीर्यते ।'

नैषधः—कथमवधारितफलोयं स्वप्नः ?

मागधः—कर्णे एवमिव इति कथयति ।

नैषधः—(सानन्दौत्सुक्यं) तत्सरभसमेव ।

मनोरथं प्राप्य महेश्वरस्य प्रसादभूम्ना प्रथितप्रभावः ।
कुलप्रतिष्ठां कुतुकैश्च तन्वन् नक्तन्दिवं नन्दतु नञ्जभूपः ।

अनेनोपक्षिप्तार्थतत्त्वनिर्णयाद्युक्तिः ।

'समप्रयोजनानां हि निर्णयो युक्तिरिष्यते '

भवतु क्वेदानीं महाराजः ।

मागधः—एवं हि जनाः कथयन्ति—अत्रान्तरे मृगयाविनोदं चिरादेवाभिलषता सेनापतिना वीरसेनेन समुत्साहितः ककुद्गिरिपरिसर एव निर्वर्तितमृगयाविहारक्रमः तदेतावतः समयस्य निवर्तत इति ।

अग्रतोऽवलोक्य—वयस्य पश्य कौतुकम् ।

मिलत्खलीनेन करद्वयेन पल्याणमालम्ब्य विलोलचूडः ।
मिथो मिलज्जानुयुगं तुरङ्गं कोऽयं समारुह्य समीपमेति ॥

नैषधः—अमुना किल केनापि राजकीयेन द्विजेन शिबिरतः प्रभुसमीपमुपसरता भवितव्यम् । तदावामप्यमुमेवानुसरन्तौ विभुसमीपं प्रतिपालयावः।

(इति निष्क्रान्तौ) शुद्धविष्कम्भः ।

ततः प्रविशत्यनुचरेणानुसृतस्तुरगाधिरूढो मृगयानिवृत्तो राजा । सानन्दम्—

अहो चिरेण लब्धो महान्विनोदः, तथाहि—

गोकर्णा लूनकर्णाः कतिचन विशिखैः पूरिताङ्गाः कुरङ्गाः
शार्दूलाः केऽपि शूलाञ्चलदलितगलाः क्रोधनिर्धूतवालाः ।
भिन्नाः पुन्नागसङ्घा अपि मदमुदिता घर्घरोद्गारिघोणा-
श्छिन्ना वन्या मयाऽऽसन्वनभुवि मृगयाविभ्रमेऽस्मिन्वराहाः ॥

( सानुस्मरणम् ) तदाकिल—

मत्कोदण्डकठोरशिञ्जितरवत्रस्तैः कुरङ्गैः समं
भूयस्स्वेदगणावकीर्णवदनग्रस्तार्धदूर्वाङ्कुरम् ।
धावन्तीः कतिचित्पदानि कथमप्यापूर्णगर्भालसाः
सारङ्गीरथ पश्यतः करुणया चित्तं मयार्द्रीकृतम् ॥

अनुचरः—सामिपादा अदिमेत्तपज्जलितकोवानलफुलिङ्गसअलपसरणमेत्तेण कबलीकरज्जिततिहुवणहिअअधीरा वि जोग्गत्तलसअंपवण्डन्तकरुणाणिस्संदिहिअआ खु तुंह्मारिसा पुरिसा ।

राजा—स्वगतम् । अहो पारम्परी स्मृतीनाम्, तथाहि—

दिशि दिशि चलितानां चञ्चलप्रेक्षणानां
कुलमथ हरिणीनां पश्यतो मानसं मे ।
स्मरति जनितनीलाम्भोजदामभ्रमाणां
चतुरयुवतिचक्षुर्वैखरीविभ्रमाणाम् ॥

अथवा । कथमद्यापि स्मरतीति, इदञ्च सकलनगराङ्गनानयनकुवलयकामनीयकसौभाग्यसाधारणमनुचिन्तनमनतिचित्रतया ननु तावदेव निवर्तते ।

पश्यामि यावदसितोत्पलजिष्णुनेत्रा-
मङ्गैरभङ्गुरतरङ्गविलासरङ्गैः ।
लावण्यपूरमभितो भवनं किरन्तीं
कान्तामशेषजनलोचनचन्द्रिकां ताम् ।

अहो अहोरूपतेयं तस्याः ।

---

(छा) स्वामिपाद अतिमात्रप्रज्वलितकोपानलस्फुलिङ्गशकलप्रसरणमात्रेण कबलीक्रियमाणत्रिभुवनहृदयधैर्या अपि योग्यस्थलस्वयंप्रवर्तमानकरुणानिष्यन्दिहृदयाः खलु युष्मादृशा महापुरुषाः ।

सा चेत्पन्नगकन्यका श्रुतिसहस्त्र[स्यापि त]स्योचिता(तो?)
दृग्भावोऽहिपतेरथैव मनुजा स्वर्गो न हृद्गोचरः ।
दिव्या चेन्ननु सम्पदा सुरपतेः क्रीतं समस्तं जगत्
का वा तत्सदृशीं शृणोमि न कदाप्यन्यामवन्यामहम् ॥

अनेनोपक्षिप्तार्थविषयकाश्चर्यावेशकथनात् परिभावनम् 'परिभावोऽद्भुतावेश' इति ।

अथवा, किममुना संशयेन ।

लावण्यार्णवसञ्जाता वर्धमाना दिवानिशम् ।
कापि चन्द्रकला धत्ते जगताममृताञ्जनम् ॥

अनेनोपक्षिप्तार्थगुणवर्णनाद्विलोभनम् ।

'नायकादिगुणानां यद्वर्णनं तद्विलोभनम् ।' इति

निमीलिताक्षस्तामेवानुध्यायन् गात्रस्तम्भमभिनयति ।

अनेनोपक्षिप्तार्थात्मकबीजस्य सुखप्राप्तिकथनात्प्राप्तिः ।

'प्राप्तिः सुखस्य संप्राप्तिः प्राप्तिरित्यभिधीयते ॥'

अनुचरः—(स्वगतम्) एसो मियआविहारेण भिसपरिस्सन्दो विअ मीलन्तणेत्तनिल्लुप्पलो णिच्चलङ्गो लक्खिज्जइ । ता इदाणिं विण्णवेमि ।

(प्रकाशम्) सामिपादा अतिमत्तविप्पइट्ठविअडदेसेसु आहेडअसञ्चलणेण किलिन्दा लक्खिवज्जह, ता विण्णवेमि इहेव्व उद्देसे ईसि विस्समिज्जउ ।

राजा—तथेति । अग्रतोऽवलोक्य,

अये जाङ्घिक, नूतनपुरपरिसरमुपगताः स्मः । तत्र—

नभोविकषणोपलोल्लिखितहेमशृङ्गोच्चयः
पुरो नयनगोचरो भवति भद्रशैलो भृशम् ।
तमेनमभितो विभान्त्यमितरत्नवातायन-
प्रक्लृप्तपथसञ्चरज्जलधराणि हर्म्याणि च ॥

ग्रीवायामश्वमास्फालयन्—

---

१ परै CL. (छा) एष मृगयाविहारेण भृशपरिश्रान्त इव मीलन्नेत्रनीलोत्पलो निश्चलाङ्गो लक्ष्यते । तस्मादिदानीं विज्ञापयामि । स्वामिपादाः । अतिमात्रविप्रकृष्टविकटदेशेष्वाखेटकसञ्चरणेन क्लान्ता लक्ष्यध्वे । तस्माद्विज्ञापयामि इहैवोद्देशे ईषद्विश्रम्यताम् ।

अये जाङ्गिक कथं पञ्चषैरेव तुरगराजस्य पदोत्पलवनैः शिबिरमुपगता वयम्।

अनुचरः—किमेत्तमच्चेरम् अच्चुदग्गदाडिआजवेण मणं वि लहुकुणन्तस्स से अस्ससेहरस्स ।

राजा—सत्यमुक्तं मनोऽपि लघूकरोतीति ।

यतः—

तर्क्यन्ते नियतं रजोभिरुदितैरुर्व्यां खुराघट्टना-
न्यालक्षीक्रियते दृशाऽद्य युगपद्यावत्तरूणां ततिः ।
वक्तुं वाऽपि पुरस्तदेतदिति मे नैवावकाशो जवा-
दस्मिन् तुङ्गतुरङ्गमे रचयति प्रोद्दण्डधाटीगतिम् ॥

अनुचरः—एसो मज्झेमग्गं पच्छाअसीअलो पेरन्तपम्मिणीविसण्डकमलमअरन्दकणकसणकसायिदमारुअपोतअपरिफन्दमन्दन्दोलिअपवालो हत्थग्गेण तुम्हे आआरअन्तोविअ केसररुक्खो से छायाइं मिअआसमअविइण्णम्हसेणाअमणपेरन्तं वीसामसोक्खं लहेह ॥

यत्र—

राजा—( तथेति तुरगादवरुह्य वृक्षमूलोपसर्पणमभिनयन् )—अये जाङ्गिक सुदूरसरणिसञ्चारणनितान्तपरिश्रान्तोऽयमश्वः । सलिलपिपासुश्च । तदधुना विमलकमलसरःपरिसरमधिनीयताम् ।

अनुचरः—जह सामिपादा आणवेन्दि ( इति साश्वो निष्क्रान्तः )

राजा—( वृक्षमूले उपविश्य, सन्तापातिशयमभिनयन् )अये कथमतिविशालशीतलच्छायालुतरुमूले निवसतोऽपि प्रतिक्षणमभिवर्धते सन्तापः ।

( विमृश्य ) अथवा, मतेरुपरिप्लुतेनालं मौग्ध्येन स्तोकतालवृन्तचलनेनैव प्रदीपकलिकाग्रैरिव प्रज्वलतोऽपि दावानलस्य प्रशमनमभिलषामि ।

सद्यः स्विद्यन्निबिडपुलकोज्जृम्भवक्षोजकुम्भ-
स्वैरामर्दप्रमुदितवधूनिर्भरालिङ्गनेन ।
सन्तापोऽयं कुपितमदनोद्दण्डकोदण्डमुक्ता-
दाग्नेयास्त्रान्मम समुदितो हन्त निर्वापणीयः ॥

---

( छा ) किमेतदाश्चर्यं अत्युदग्रधाटिकाजवेन मनोऽपि लघूकुर्वतोस्याश्वशेखरस्य ।

( छा ) एष मध्ये मार्गं प्रच्छायशीतलः पर्यन्तपद्मिनीविस्फुटकमलमकरन्दकणकषणकषायितमारुतपोतकपरिस्पन्दमन्दान्दोलितप्रवालो हस्ताग्रेण युष्मानाकारयन्निव केसरवृक्षः, अस्यच्छायायां मृगयासमयविकीर्णास्मत्सेनागमनपर्यन्तं विश्रामसौख्यं लभध्वम् ।

( छा ) यथा स्वामिपादा आज्ञापयन्ति ।

( साशङ्कमभितो विलोक्य ) दिष्ट्या न कश्चिदत्र जनः, येन मामसम्भावितवस्तुसमागममरुमरीचिकासलिलैरेव सन्तापमान्तरमपनेतुकाममवलोक्य भृशमपहसेत् ।

अथवा किमन्येन । मयैवाहमपहास्ये ।

तथा हि—

केनापि पुण्येन दृशोः कदाचित् क्षणं पुरोभूय तिरोभवत्याः ।
कस्याश्चिदाश्लेषरसेन काङ्क्षन् सन्तापशान्तिं स कथं न हास्यः ॥

यद्वा—परवन्तो हि वयं महेश्वरेणाप्यनतिलङ्घनीयशरेण विषमशरवीरेण, तत्तमेवोपालभे । आकाशे मदनमभिलक्ष्य—

अलभ्यार्थाभावादनवगतचिन्तस्य हि मम-
प्रदर्श्याग्रे काश्चिद्युवतिमिव मायामभिनवाम् ।
धृतिं दूरीकर्तुं भ्रमयितुमकाण्डेऽपि च मनो-
विधातुं सन्तापं वद किमपराद्धं स्मर मया ॥

अहो राजनि विरुन्ध ( ध्य ? ) ति तदीयः सर्वोऽपि विरुद्ध एव ।

यतः—सहृदयमसमेषोरुन्मिषत्पङ्कजाना-
मुपवननलिनीनां कृष्टकिंजल्कसारः ।
मरुदतनुत पूर्वं यो ममैव प्रमोदं
क्षिपति मयि स एव प्रज्वलाङ्गारखण्डान् ॥

अनेन मरुतः सुखदुःखहेतुत्वकथनात् विधानम् ।

सुखदुःखकरं यत्तु तद्विधानं विदुर्बुधाः ।

( निश्वस्य ) किमिदानीं करोमि ।

नेपथ्ये—धीरोभविअ विस्सद्धो होहि ।

राजा—आकर्ण्य सहर्षम् । अये, अमृतमयीव काऽप्युपश्रुतिरियमस्मानुज्जीवयति । भवतु यथोक्तं करोमि । अनेन नेपथ्योक्तेरङ्गीकारकथनात् समाधानं नामाङ्गम् ।

वस्तुनः पुनराधानं समाधानमिहोच्यते ।

( नेपथ्यमभिलक्ष्य )

---

( छा ) धीरो भूत्वा विस्रब्धो भव ।

मातरमिवेहितानामाधात्रीमधिकवत्सलामनिशम् ।
भगवत्युपश्रुते त्वामवलम्ब्य कथञ्चिदपि लभे धैर्यम् ॥

भवतु कुत्रत्येयमिति जानामि । नेपथ्याभिमुखवलोक्य । आः कथमस्मत्प्रियवयस्यश्चूडाकर्णः, केनापि कलहसन्नाहीवायमभिवर्तते । तथाहि—

गाढाबद्धोत्तरीयं कटिभुवि जवदोस्त्रस्तयज्ञोपवीतं
भ्राम्यन्मुष्टि प्रकामप्रतिचलदधरं प्रस्फुरन्नासिकाग्रम् ।
नृत्यच्चूडं नितान्तस्खलितपदयुगन्यासमुद्वेलनिर्य-
द्धर्माम्भोरूषिताङ्गं धुरि पतति रुषा हन्त केनापि योद्धुम् ॥

दिष्ट्या क्षणमप्यस्य संरम्भदर्शनेन वा स्मरसन्तापमान्तरमन्तरयामि ।
अथवा—

शृङ्गाररसासक्तेः पुरतो दूरे रसान्तरविचारः ।
ग्रीष्मे प्रतपति तपने विधि[ना] विन्यस्तदीपरोचिरिव ॥

प्रविश्य यथोक्तो विदूषकः—मुष्टिमुद्यम्य, अहो धूअ दासीएउत्त अवि तुज्झ कण्णपहं णावइण्णो एसो चूडाकण्णो, जदो एव्वं गव्वुत्ताणो होसि । ता चिट्ठ दाव दाणीं एव्व तुमं सिहंडयंमि गण्हीअ इमाए लाअण्ण गोण्डिहिं णालिएरसहस्सस्स वि एक्कप्पहारेण तिलसो खण्डीकरणं मि परिक्खिअपण्डिच्छाए मुट्टीए तुह शीसं सलत्तच्छूणीकरिस्सम्, ( इति विकटं परिक्रामन् राजानमवलोक्य ) जेदु महाराओ, ( इति वदन् पुनः परिभ्रमणमभिनयति )

राजा—अहो कौतुकपदमिदम्, कस्मै पुनरयं क्रुद्ध्यतीत्यापृच्छ्य ज्ञास्यामि ( किञ्चिदुच्चैः ) सखे चूडाकर्ण

कोपस्फुरन्मुखविसृत्वरघर्मपूरै-
रेकार्णवानि भुवनानि विधातुकामः ।
उद्भ्रान्तजीर्णपृ(वृ?)षदंशपिशङ्गनेत्रः
सन्नह्यसे त्वमधुना कतमेन योद्धुम् ॥

विदू०—चूडाकण्णमित्तंति तिहुवणजाणिदस्स वि होदो अत्ताणं विसुमरिअ अविणअमाअरन्तेण तेण दुव्विणीदेणेव्व ॥

( छा ) अरेधूर्त दास्याः पुत्र, अपि तव कर्णपथं नावतीर्ण एष चूडाकर्णो यदेवं गर्वोत्तानो भवसि, तत्तिष्ठ तावत् क्षणमिदानीमेव त्वां शिखण्डके गृहीत्वाऽनया राजन्यगोष्ठीभिर्नालिकेरसहस्रस्यापि एकप्रहारेणैव तिलशः खण्डीकरणे परीक्षितपाण्डित्यया मुष्ट्या तव शीर्षं सरक्तोच्छूनं करिष्ये ।

( छा ) जयतुमहाराजः ।

( छा ) चूडाकर्णमित्रमिति त्रिभुवनज्ञातस्यापि भवत आत्मानं विस्मृत्याविनयमाचरता तेन दुर्विनीतेनैव

राजा विहस्य, अहो बलवत्ता मम चूडाकर्णमित्रमिति।

विदू०—को एद्ध सन्देहो जइ सो मारुदहदयो पेक्खिज्जइ तइ मित्तत्तणस्स अणिरिणत्तणं भवे।

राजा—( स्वगतम् ) आः समाकर्णितममुना ह्यस्मदभिनिवेशितमिति लज्जते मे हृदयम्। अथवा। लज्जितुमप्यद्य जानाति किमयं जनः॥

यदा सक्तं तस्यां हृदयमधरीकृत्य निखिलं
तदालोक्य व्रीला क्वचिदिव विलिल्ये मम भिया।
विवेकः कुत्रापि क्वचन विनयः क्वापि चरितं
स च स्थेमा सत्यं चपलमधुना विश्वसितु कः॥

भवतु यथा तथावा। प्रकाशम्। सखे यदि दृष्टः सम्प्रति किं प्रतिचिकीर्षति भवान्।

विदू—दुव्वासम्मि वि लीलाए दावन्तस्स मह को वत्स जं पलं तं करिस्सं

राजा—आः परिज्ञातमपि (भि ?) शप्तुमुत्सहे (हसे ?)। तत्किल महत्फलं विप्रकोपस्य।

विदू०—णहि णहि। अण्णं किं वि अद्वि पलं।

राजा—कथमिव

विदू०—जइ सो लक्खिज्झइ तं गह्णीअ जण्णोपवीतं विघुण्डिअ सन्तिपुण्णाहिप्पमुहसन्तिबलिकम्मसहापवेसस्स अजोग्गं करिअ अइरादो न अरादो बहिक्कारइस्से।

राजा—अहो पराक्रमः श्रोत्रयरस्य भवतः। सर्वे हसन्ति।

विदू०—वअस्स मिअआणिग्गमणसमअम्मि होदा ईरिसो तारिसोत्ति जो पसंसिदो आसि सो एव्व मारुओ सम्पदं कहं तुहं एत्तिउक्कण्ठाकारणं संजातोदोत्ति विंहिदंहि।

---

( छा ) कोऽत्र सन्देहः यदि स मारुतहतकः प्रेक्ष्यते तदा मम मित्रत्वस्यानृणत्वं भवेत्।

(छा) दुर्वासस्यपि लीलया धावतो मम कोपस्य यत्फलं तत्करिष्यामि।

(छा) न हि नहि अन्यत्किमप्यस्ति फलम्।

(छा) यदि स लक्ष्यते तदा तं गृहीत्वा यज्ञोपवीतं विखण्ड्य शान्तिपुण्याहप्रमुखशान्तिबलिकर्मसभाप्रवेशख्यायोग्यं कृत्वाऽचिराद्धगरात् बहिः करिष्ये।

(छा) मृगयानिर्गमनसमये भवता ईदृशस्तादृश इति यः प्रशंसित आसीत स एव मारुतः सांप्रतं कथं तवैतावदुत्कण्ठाकारणं सञ्जात इति विस्मितोऽस्मि।

राजा—(स्वगतम्) कथमस्मै निवेदयेयमलीकप्रायवस्तुदर्शनजनितमभिनिवेशम् । अथवा अवश्यं वक्तव्यमेव दृष्टमलीकमन्यद्वा तदिति विस्रम्भनिवासाय वयस्याय । अत्रैव हि विश्रामो नितान्तमन्तरङ्गस्य ।

(प्रकाशम्) सखे अपि न जानास्युत्कण्ठितस्य सर्वमुत्कण्ठायै इति ।

विदू०—वयस्स उक्कण्ठाकालणं पुच्छेमि, अवि तुए अन्तेउरम्मि देवीए पणअकिदो को वि कोवो पसंञ्जिदो भवे, जेण अहं वि मज्झत्तणं ओलंबिअ दुवेणं तुह्माणं हत्थादो नालिएरादिअं गण्हिस्सं ।

राजा—असंभावितमेतत् ।

विदू—तइ किं कहेहि ।

राजा—मृगयां गतेन हि मया कान्ता काचिन्मनोज्ञलावण्या ।
आलोकिता रतिपतेर्वीराग्रेसरस्य वैजयन्तीव ॥

विदू—तदो तदो ।

राजा—तस्यास्तनुद्युतिनवाम्बुषु सञ्चरन्त-
मालोक्य मे हृदयमीनमतीव वेगात् ।
आकर्णतीक्ष्णशरनिर्मितवागुराभि-
र्बध्नाति वीतकरुणो विषमास्त्रदाशः ॥

एतद्गूढबीजस्य प्रकाशना दुद्भेदः ।
उद्घाटनं यद्बीजस्य स उद्भेद उदाहृतः ।

(नेपथ्ये)

हेसाहि कण्णगहिराहि तुरङ्गमाणं दम्भेरमाण कडुहेहि वि बिंहिएहिं ।
धीरेहि भेरिणिणएहि अ सेणिआणं घोसेहि अज्ज निबिडं शिबिरं समन्ता ॥

विदू—(कर्णं दत्वा) वअस्स अनुअरस्स उग्घोसो एसो ।

राजा—(सविमर्शम्) मामन्विष्यतां मार्गान्तरेण शिबिरमुपसर्पतां सैनिकानामयं कोलाहलः ।

---

(छा) वयस्य उत्कण्ठाकारणं किमिति पृच्छामि । अपि त्वया देव्याः प्रणयकृतः कोपः प्रसञ्जितो भवेत् । येनाहमपि मध्यस्थत्वमवलम्ब्य द्वयोरपि युवयोर्हस्तात् नालिकेरादिकं गृहीष्यामि ।

(छा) तर्हि किं कथय

(छा) ततस्ततः

(छा) हेषाभिः कर्णगभीराभिस्तुरङ्गमाणां स्तम्भेरमाणां कटुभिरपि बृंहितैः ।
धीरैर्भेरीनिनादैश्च सैनिकानां घोषैरद्य निबिडं शिबिरं समन्तात् ॥

(छा) वयस्य अनुचरस्योद्घोष एषः ।

विदू—( सर्वतो विलोक्य ) वअस्स दिट्ठिआ ईसि विगळन्तवेओ चण्ड-अरादवो। ता विसज्जे हि मं दाणिं भोअणणिवत्तणाय।

राजा—सर्वस्याप्यपरिहार्यः स्वस्वाभिनिवेशः। यदयमनेन कार्यसत्वेऽप्यशनायापनोदनमेव सन्ततमभिलषति, अहं पुनः

तामेव तत्क्षण समञ्चितधर्मजालैः
स्विद्यन्मृगीमदललामलसल्ललाटाम्।
वाचालभृङ्गचरणाहृतकर्णपूर-
व्यावृत्त(वर्त्य?)माननयनां ललनां स्मरामि॥ (इति चिन्तयति)

विदू—वअस्स किस मुहा चिन्तए मज्जन्तोऽसि, अहं एव्व इदो णादि-समीवट्टिए दोड्डुराअसमुद्दणामग्गहारम्मि णिवट्टिअभोअणो तुरीयं आगत्तुय झडिदि तुह इच्छिदं घडइस्सं, दावपेरन्तं एदमदूरगदं चंपअवणं पविसिअ परिसरमरगदसरतरङ्गमारुहमासेवन्दो चिट्ठ।

अत्र तवेष्टं घटयिष्यामीत्यनेनोपक्षिप्तकन्याप्राप्तिरूपार्थानुगुण्येन नायक-प्रोत्साहनात् भेदः—

बीजस्योत्तेजनं भेदो यद्वा प्रोत्साहनं मतम्।

राजा—उन्निद्रकुसुमकाननमुद्यानसरस्तरङ्गपवनश्च।
न तथा मुदं मम सखे घटयिष्यामीति तव यथा कथितम्॥

तथाऽप्यनतिलङ्घनीयं सुहृद्वचनमिति तत्रैव भवन्तं प्रतिपालयिष्यामि।

अत्र तत्रैवेत्यादिवाक्येन इष्टसम्पादने अत्यौत्सुक्यसूचनादयमारम्भः—

'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे' ॥ इति॥

तदेव करणम्—

करणं प्रकृतारम्भोऽनन्तराङ्गस्य हेतुमत्।
'बीजानुगुण [ प्रस्तुतकार्या ] रम्भः करण'मित्युक्तेश्च।
इत्थमारम्भबीजसम्बन्धरूपः साङ्गो मुखसन्धिः।

विदूषकः—वअस्स सन्ततपरिहसणसीलो एसो तक्काळिआसासणं किंवि किंवि महुरंविय कहिअ चलिदेत्ति मामन्तेहि।

---

(छा) वयस्य दिष्ट्या ईषद्विगलद्वेगश्चण्डकरातपः, तद्विसर्जय मामिदानीं स्नानभोजननिवर्तनाय।

(छा) वयस्य कस्मान्मुधा चिन्तायां मज्जसि। अहमेव नातिसमीपस्थिते दोड्डराय समुद्रनामाग्रहारे निर्वर्तित-भोजनः त्वरितमागत्य झटिति तवेष्टं घटयिष्यामि, तावत्पर्यन्तमेतदूदूरगतं चम्पकवनं प्रविश्य परिसरमरकतसरस्तरङ्ग मारुतमासेवमानस्तिष्ठ

राजा—सखे किं बहुना श्रूयतामस्मदध्यवसायः।

अससमशरसमुद्यत्तापनिर्वापहेतु-
वचनममृतकल्पं यत्त्वयैवैकमुक्तम्।
अपहसनमिदं वा तत्क्षणाश्वासनं वा
तदुपरि निहिता मे सर्वथा जीविताशा॥

विदू०—तह होदु इति (निष्क्रान्तः)

राजा—कः कोत्र भोः, अश्वोऽश्वः।

(प्रविश्य साश्वः पुरुषः)—उवट्टिओ सज्जीकिदो एस तुरङ्गो।

राजा—(तुरगाधिरोहणमभिनयन्) अये जाङ्घिक निर्दिश्यतां सरणिः।

अनुचरः—इदो इदो सामिपादा। (इति निष्क्रान्ताः सर्वे)

इति चन्द्रकलाकल्याणे प्रथमोङ्कः

। अथ द्वितीयोङ्कः।

ततः प्रविशति पूर्ववदेव राजाऽनुचरश्च।

अत्र पूर्वाङ्कप्रविष्टपात्रस्यैव सूचकं विना प्रवेशकथनादयमङ्कावतारः।

अनुचरः—इदो दाणिं णियणिम्मलसलिलब्भन्तरपडिबिम्बिअविविहमणिसाणुत्थइअभद्दसेलसिङ्गाए दइअं णईपइमहिरंजेदुं विइत्तवण्णपट्टकञ्चुअपिणद्धगुरुअरत्थणभरबन्धुराए विअ से दक्खिणपिनाइनीनामहेआए सेवलिणीए समीपं उगवअह्म।

राजा—अये नयनानन्दिनी खल्वियम्।

उभयतटसमुद्यच्चम्पकारण्यवाटी-
सुमगलितपरागैः पिञ्जरीकारिताशा।
पुलिनविहरमाणक्रौञ्चसारङ्गहंसा
तरलतरतरङ्गा निम्नगा लक्ष्यते या॥

(छा) वयस्य सन्ततपरिहसनशील एष तात्कालिकाश्वासनकिमपि किमपि मधुरमिव कथयित्वा चलित इति मा मन्त्रय।

(छा) उपस्थितः सज्जीकृत एष तुरङ्गः।

(छा) तथा भवतु

(छा) इत इतः स्वामिपादाः

(छा) इतइदानीं निजनिर्मलसलिलाभ्यन्तरप्रतिबिम्बतविविधमणिसानुस्थगितभद्रशैलश्रृङ्गाया दयितं न दीपतिमभिरञ्जयितुं विचित्रवर्णपट्टकञ्चुकपिनद्धगुरुतरस्तनभरबन्धुराया इवास्या दक्षिणपिनाकिनीनामधेयायाः शैवालिन्याः समीपमुपगतौस्वः।

अनुचरः—कुदो दाणिं इमाए पुलिनङ्कणेसु समुन्नमिअकन्दरं राअहंसकदम्बं परिदो दिअन्ते विलोएदि ॥

राजा—अये किं न पश्यति भवानितः।

धर्माम्भः कणदूषितार्धतिलकं प्रम्लानकर्णोत्पलं
निश्वासग्लपिताधरं च नितरामायस्तदोर्वल्लिकम्।
अर्धोन्मीलितनेत्रमुन्नतकुचस्पन्दत्रसन्मध्यमं
मन्दं मङ्क्तुमिमाः प्रयान्ति सुदृशश्चण्डातपे शाम्यति ॥
आसामम्बुरुहाक्षीणां श्रोतुं मञ्जीरशिञ्जितम्।
राजते राजहंसानां समवायः समुन्मुखः ॥

हंसकुलमभिलक्ष्य स्वगतम्।

रे हंसयूथ वहसे यदहङ्कृतिस्ते ( तिं त्वं ? )
तस्या न पश्यसि गतिक्रममङ्गनायाः।
यद्वा न दृप्यसि कथं त्वमलब्धपूर्वा-
नभ्यस्य मत्प्रियतमापदयोर्विलासान् ॥

अनेन नद्यादिवर्णनादिना विच्छिन्नस्य नायिकाकथानुरूपबीजस्य पुनरविच्छेदकथनादयं बिन्दुः।

'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥'

अनुचरः—इदो दाणिं णिरन्तरुब्भिण्णसुरहिल कुसुमकुञ्जसञ्जवणसन्तदकीलन्तकिण्णरललनाजणकुलमहुरसङ्गीदरसविहवविहुदपरिसरहरिहमणिरयिअसरिणीपहसच्छन्दसमुदिअसीअलसलिलसोत्तणिचपरिपुज्जन्तालवालवलअसअम्परिवढन्तेण आमूलसमुग्गच्छन्तरुअलपुञ्जिअपराअपडलधवलीकिअङ्गभिङ्गकलहरेहा(कुलरेहा ?)वलइअपासजुअलदाए णिअणिआणुरूवतरुवरसअंवरणमहूसवसमअलदाकण्णादिज्जमाणगुरुअरमोत्तिअहारमण्डलालङ्किदेण विअ कुसुमापअत्थगगणङ्कणावइण्णविज्जाहरदारीआचरणखरन्तणवलक्खारसानुबन्धदिउणिआरुणिमकिसलयमेदुरेण विविहतलुणिअरेण विम्मारिअचण्डकिलणपसरणं नन्दणं विअ तिहुवणहिअअणंदणं अलङ्करिज्जइ सामिहिमेदमुज्जणम्।

(छा) कुत इदानीमस्याः पुलिनाङ्गणेषु समुन्नमितकन्धरं राजहंसकदम्बं परितो दिगन्तान्विलोकयति

(छा) इत इदानीं निरन्तरोद्भिन्नसुरभिलकुसुमकुञ्जसंजवनसन्ततक्रीडत्किन्नरललनाजनकुलमधुरसङ्गीतरसभवविविद्रुतपरिसरहरितमणिरचितसरिणीपथस्वच्छन्दसमुदितशीतलसलिलस्रोतोनित्यपरिपूर्यमाणालवालस्वयम्परिवर्धमानेन-आमूलसमुद्गच्छत्तरुतलपुञ्जितपरागपटलधवलीकृताङ्गभृङ्गकलह(कुल)रेखावलयितपार्श्वयुगलतया निजानिजानुरूपतरुवरस्वयं-

राजा—(विलोक्य)अहो रम्यता वनस्य ।

उन्निद्रस्तबकभ्रमन्मधुकरा पुन्नागवन्या पुरः
पार्श्वेऽस्याः परिणद्धपञ्चमपिकश्रेणी रसालावलिः ।
तामञ्चद्वलमानमन्दपवना मन्दारवाटी च त-
न्मन्येऽस्मिन्महिमण्डलेऽपि च किमप्यानन्दनं नन्दनम् ॥

( किञ्चिद्दूरे विलोकयन् )

समन्तादाबद्धस्फुरितमणिपुत्रीकरतल-
भ्रमद्यन्त्रोदञ्चत्सलिलकणसंसक्तसविधः ।
इतः क्रीडाशैलः कनककदलीकाननन्नट-
न्मयूरापिच्छाग्रप्रचलदनिलोऽयं विलसति ॥

अनु०—इदो दाव पच्चहनिव्वट्टिज्जन्तलीलामज्जणणिज्जरसीमन्तणीजणकुअकुम्भकुङ्कुमकुरङ्गमदजम्बालिअसलिलरिङ्गत्तरङ्गाणिलमंदन्दोअविअसिअसरसिअदोलरूढचक्कमरालमिहुणसिसिरण्ठसरमणोहरं मरगदसरो ।

राजा—( विलोक्य ) रमणीयमिदं सरः ।

अनु०—अंहहे इमस्स सरसो पासचरन्ता अंहो साणुत्तेजीणसुवण्णरअणकञ्चुअपिणद्धसरीरा विअ जादह्म ।

राजा—विहस्य अरे कथ्यतएव भवता मरकतसर इति । पश्यास्य हि सरसः ।

तरुणमरकतश्रीवन्धुराम्भःप्रभाभि-
र्वनमिदमभितोऽपियासदूर्वादला(भं?) ।
( आत्मीयं श्वेताश्वं निर्दिशन् ) किं बहुना
न हसति हरिताश्वं रंहसैवाद्यसोऽयं तुरगमणिरुदञ्चद्धर्मवर्णश्रिया च ॥

---

वरणमहोत्सवसमयलताकन्यकाजनदीयमानगुरुतरमौक्तिकहारमण्डलालङ्कृतेनेव कुसुमापचयार्थगगनाङ्गणावतीर्णविद्याधरदारिकाचरणक्षरन्नवलाक्षारसानुबन्धद्विगुणितारुणिमकिसलयमेदुरेण विविधतरुनिकरेण विस्मारितचण्डकिरणप्रसरणं न्दनमिव त्रिभुवननन्दनमलङ्क्रियते स्वामिभिरेतदुद्यानम् ॥

(छा) इतस्तावत्प्रत्यहनिर्वर्त्यमानलीलामज्जननिर्जरसीमन्तनीजनकुचकुम्भकुङ्कुमकुरङ्गमदजम्बालितसलिलरिङ्गत्तरङ्गानिलमन्दान्दोलितविकसितसरसिजडोलाधिरूढचक्रधाकमरालमिथुनशिशिरकण्ठस्वरमनोहरं मर्कतसरः ।

( छा ) अहो एतस्य सरसः पार्श्वे चरन्तावावां शाणोत्तेजितसुवर्णरत्नकञ्चुकपिनद्धशरीराविव जातौ ।

अनुचरः—सामिपादा ईसि मं कित्थेहि अपुव्वेण वअणसुहारअदाणेण, किस से तडाअस्स एरिसो कन्तिलाहो ।

राजा—मुखरोऽयं प्रवादः । शृणु

नवमणिरचिताङ्गं नर्मगोधेयरूपं (?)
पशुपतिमिह मन्दं प्रेमतः सञ्चरन्तम् ।
मरकतमयपुच्छे संस्पृशन्त्यद्रिकन्याऽ-
प्यरुणरुचिरवाप्ता तस्य वालाग्रवर्णम् ॥

अनु०—अहो विचित्तो कहापसङ्गो एसो तदो दएह ।

राजा—

अन्विष्य चान्विष्य तमद्भुताङ्गं
प्रियं प्रकामश्रमविह्वलाङ्गीम् ।
गारुत्मता चेति गजेन्द्रयूनां
प्राहुस्तदा तां प्रणयेन सख्यः ॥

( स्मृतिमभिनीय कृताञ्जलिः )

ईषद्विश्लथबन्धचन्द्रशकलं व्यालोलनासामणि
प्रस्विद्यद्वदनाम्बुजं पृथुतरश्रोणीलुठन्मेखलम् ।
व्यत्यस्यन्मणिहारमुन्नतकुचभ्रश्यद्दुकूलाञ्चल
स्वस्थानार्पणसज्जदालि कलये मातुः शिवान्वेषणम्

इति द्विस्त्रिर्वदन्नानन्दातिशयमभिनयति ।

अनु०—तदो दएह

राजा—ततश्च

श्रान्ता तदा शैलसुता वनेऽस्मि-
न्स्वयोगभूम्ना तमिमं तटाकम् ।
प्रकल्प्य सस्नौ सलिलाशयोऽयं
प्रापश्च तत्पूर्वमिमामभिख्याम् ॥

---

( छा ) स्वामिपादाः ईषन्मां कृतार्थयत अपूर्वेण वचनसुधारसदानेन, कस्मादस्य तटाकस्य एतादृशः कान्तिलाभः।

( छा ) अहो विचित्रः कथाप्रसङ्ग एषः, ततो दयध्वम् ।

१. प्रापु OL.

( छा ) ततो दयध्वम् ।

अनु०—अस्सुदपुव्वकहापसङ्गेण अगणिआदिवाहिअसरणिदीहत्तणेहिं अम्हेहिं मरअदसरपुव्वन्तरेण विलसन्तो कीलापव्वओ । अदूरीकिदो ।

राजा—इतःपरमतिमृदुलचरणलीलाविन्यासार्होऽयमुद्देशः तदश्वादवतराम (इति तथाकुर्वन्) अये जाङ्घिक क्षणमात्रं बहिराम्रवणे परिश्रान्तमर्वन्तं विश्रमय्य नातिदूरवर्तिनं नासीरमन्दुराङ्गणमधिनयस्व ।

अनुचरः—जहि सामिपादा आणवेन्ति, ( इति साश्वो निष्क्रान्तः )

राजा—( किञ्चित्परिक्रम्य अग्रतोऽवलोक्य ) अये इमं किल क्रीडापर्वतम् ।

सिंदूरचूर्णकुसुमप्रकरावकीर्णा
सोपानपङ्क्तिम(र)भितः परिकल्पितेयम् ।
यस्यां हरिन्मणिविनिर्मितहंसपक्ष-
छायां लिखन्ति हरिणा हरितभ्रमेण ॥

यावदेनामारोहामि, इति तथा कुर्वन्, क्रीडापर्वत उपविश्य प्रतीचीं विलोकयन्—

अये चरमगिरिशिखरस्य पञ्चषयुगान्तरमवलम्बते तदिदमम्बरमणिबिम्बम् । ततः किल

त्रिचतुरदलवर्जं मीलदम्भोजषण्डं
तरुषु तरणिभासस्तप्तचामीकराभाः ।
उपरि च निजनीडान्युद्भमन्तः शकुन्ताः
स्फुटमचिरभवित्रीं सूचयत्यद्य सन्ध्याम् ॥

तत्किमिदानीमप्युपहृतप्रियवचनः प्रियवयस्यो न समायातः ।

प्रविश्य विदूषकः—सव्वस्सवि जणस्स अवज्जणिज्जो पकिदिगुणो, जेण मए छुहापिसासिआपरिक्खोहिअजठरेण तदा पच्चग्गकण्णआतारिसतिक्खकडक्खवाउरावलयेहिं भमन्तं वअस्सं वि महाराअं जणो विअ जणमुवक्खिय णिअकज्ज एव्व पवहिदमासी ॥

अत्र महाराजमुखवचनेन प्रथमं लक्ष्यभूताया नायिकाकथायाः पच्चग्गकण्णेत्यादिवाक्येन पुनर्व्यक्तीकरणात्प्रतिमुखसन्धिरयम् ॥

---

( छा ) अश्रुतपूर्वकथाप्रसङ्गेनागणितातिवाहितसरणिदैर्घ्याभ्यामावाभ्यां मरकतसरःपूर्वोत्तरेण विलसत्क्रीडापर्वतः अदूरीकृतः ।

( छा ) यथा स्वामिपादा आज्ञापयन्ति ।

( छा ) सर्वस्यापि जनस्यावर्जनीयः प्रकृतिगुणः येन मया क्षुत्पिशाचिकापरिक्षोभितजठरेण तदा प्रत्यग्रकन्यकातादृशतीक्ष्णकटाक्षवागुरावलयैर्भ्रमन्तं वयस्यमपि महाराजं जनइव जनमुपेक्ष्य निजकार्य एव प्रवर्तितमासीत् ।

'लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् ।'

( किञ्चिद्धत्वा उदरं परिमृज्य )दिट्ठिया णिव्वट्टिअं णिअकज्जम् । अदोपरं पिअवअस्सं अण्णेसंमि ।

( परिक्रामन्सानुस्मरणम् ) सव्वजणस्स वि महाराजसेवणं णाम कोवि महद्धो अलङ्करोत्ति सचो एव्व लोअवादो ॥

सानन्दं संस्कृतमाश्रित्य

धनिकजनगृहेऽन्तर्नर्तितस्वैरवृत्तिः
शिशुरपि च समस्तैस्तूयते नम्यते च
इति सति धरणीशस्यान्तरङ्गो य आस्ते
प्रभवति भुवि को वा प्राभवं तस्य वक्तुम् ॥

अत एव किल यावदग्रहारकोणमविशं तावदेव

वेशु(भीत्यो ? )त्थाय प्राञ्जलि प्राणमन्मां
केचित्केचित् स्वस्वगेहान्यनैषुः ।
केऽपि स्वार्थान्कर्णयोरालपन्मे
ताम्बूलाद्यैश्चोपचारानतन्वन् ॥

तदाणिं एव्व [ महारअ ] सविहट्ठिदं मं सोदूण अम्ममहाराअजनकवीर-विह्नुरइअवीरराअसमुद्दणामाग्गहारट्ठिआ—

कादव्वं मह वुत्तअस्स इमिणो मौञ्जीगुणाबन्धणं
कण्णा सा परिणिज्जए मह मये कञ्जो तडाओ णवो ।
सङ्कप्पो गुरुहिं हि जो विरइओ काढुं वि जण्णं ति मं
सभ्भा केवि विवेहिऊण विविहं कज्जं कहन्ता णिजम् ॥

तत्ताणं अहिलसिआइं सहिणो रण्णो समअं दंसिअ णिवेदइस्सं । सम-अप्पयुत्ता खु विणत्ति ईसिंपि कप्पलआसदायदि । अहवा ।

कहं वा समअलाहो । अहिणवकण्णिआसमुस्तुअत्तणपरिच्चत्तरज्जबाहे-रतन्तस्स विह्नुणो ॥

---

( छा ) दिष्ट्या कथञ्चित् निवर्तितं निजकार्यम् इतःपरं वयस्यमन्विष्यामि ।

( छा ) सर्वजनस्यापि महाराजसेवनं नाम कोऽपि महार्थोऽलंकार इति सत्यमेव लोकवादः ।

( छा ) तदानीमेव महाराजसविधस्थितं मां श्रुत्वा अस्मन्महाराजजनकवीरविभुरचितवीरराजसमुद्रनामाग्रहारस्थिताः कर्तव्यं मम पुत्रकस्यास्य मौञ्जीगुणाबन्धनम् कन्या सा परिणीयते मम मया कार्यस्तटाको नवः सङ्कल्पो गुरुभिर्यो विरचितः कर्तुं च यज्ञमिति मां सभ्याः केऽपि विवेष्टय विविधं कार्यं कथयन्तो निजम् ॥ तत्तेषामभिलषितानि सख्युः राज्ञः समयं दृष्ट्वा निवेदयिष्ये । समयप्रयुक्ता खलु विज्ञप्तिरीषदपि कल्पलताशतायते । अथवा । कथं वा समयलाभः । अभिनवकन्यकासमुत्सुकत्वपरित्यक्तराज्यबाह्यतन्त्रस्यास्य विभोः ।

अत्र अहिणवेत्यनेन पूर्वदर्शितस्य पुनर्वर्णनान्तरेण व्यवहितार्थस्यानुसरणात्परिसर्पो नामाङ्गम्—

पूर्वदृष्टपदार्थस्य त्वङ्गं भेदादिना ततः ।
अदृष्टस्य पुनः किञ्चित्परिसर्पो ह्यनुस्मृतिः ॥

होदु जह तह वा, एसो वयस्सो मं पडिवालअंतो चिट्ठइ । ( किञ्चिद्गत्वा स्वाङ्गानिपश्यन् सौरभाघ्राणमभिनीयोच्चैर्विलोक्य )

एदे पलिमलमलिम्मुआ महुआरा मं [जाव] अहिवहन्ति दाव उत्तरिज्जेण किदावकुण्ठणो वयस्सस्स सआसं ॥

( इति तथा कुर्वन् अवकुण्ठन मभिनीय ) जेदु महाराओ

राजा—( अवकुण्ठिताङ्गं पश्यन् ) चकितः किमायासि, शङ्कते किंनु देवी नवललनानयनवलनलुलितं माम्

अत्र नवललनानयनवलनेत्यादिना नायिकाया अभिलाषानुकूलो व्यापारात्मा विलासो नाम प्रतिमुखसन्धेरङ्गं सूच्यते ।

विलासः सूच्यते प्राज्ञैर्व्यापारो रतिसूचकः ।

विदूषकः—महुअरेहि अद्ध अपराद्धोम्हि । ता कुदो मुहा तरलो होसि ।

राजा—अये अपरिचितसमुत्कण्ठागन्धसरणिरसि, शृणु ।

द्वयोरप्यालापो यदि भवति शङ्कातरलता
विविक्तेऽप्यावासे चकितचकितालोकनमपि ।
असीमास्वाशंसासलिलविधिवीचीषु विहृतिः
प्रसिद्धोऽयं पन्था भवति भृशमुत्कण्ठितवताम् ॥

विदू—णं राआ खु तुमं जेण केणावि पसङ्गेण पवड्ढन्तमुक्कण्ठं कहं णिरोहिदुं ण भवसि

राजा—अयमेवात्यन्तदुर्वहो भरो यद्राजभावेऽप्युत्कण्ठितत्वं नाम पश्य।

मनस्यन्याक्रान्तेऽप्यनुदिनमनेकैः पटिमभि-
र्जगद्भद्रे पीठे स्थितिरपरिहार्या नृपतिभिः ।

---

( छा ) भवतु यथा तथा वा एष वयस्यो मां प्रतिपालयन् तिष्ठति ।

( छा ) एते परिमलमलिम्लुचा मधुकरा मां यावदभिवर्तन्ते तावदुत्तरीयेण कृतावकुण्ठनो वयस्यसकाशं गमिष्यामि ।

( छा ) जयतु महाराजः

( छा ) मधुकरैरत्रापराद्धोऽस्मि तत् कुतो महातरलो भवसि ।

(छा) ननु राजा खलु त्वं येन केनापि व्यासङ्गेन प्रवर्धमानामुत्कण्ठां कथं निरोद्धुं न भवसि ।

परं शुद्धान्तेभ्यः प्रकृतिनिपुणेभ्यः प्रगुणितो
मुहुर्निन्होतव्यो मनसिजविकारः कथमपि ॥

अनेन सभाप्रवेशान्तःपुरवासयोरनिष्टत्वेनारतिसूचनाद्विधुतं नामाङ्गम्

अनिष्टवस्तुनिक्षेपादरतिर्विधुतं मतम् । इति ।

विदू—रञ्जिदारञ्जिदप्पकिदिमण्डलस्स रण्णो रीहि खु एसा कज्जासणारोहणाभावे विविहोवसग्गसमुग्गमसंभावणा णाम, तुए उण लीलयेव्व वसीकिदतेल्लोक्कविअ अलच्छीअदाए किदकादव्वेण कहं कहं (तह?) ठादुं ण सक्खम्, जस्स खु होदो सइवाअत्तीकिदसिद्धिणो रहुवइणो विअ सुमन्तो मन्ती णिउणो चिट्ठइ ।

पेक्ख पहुत्तणं सइवस्स ( सहर्षं संस्कृतमाश्रित्य )

क्वचिद्विद्वद्वृन्दैर्विविधनयसिद्धान्तनिपुणैः
क्वचिद्भूमीपालैरमितबलसम्भावितभुजैः ।
वणिग्भिर्द्वीपेभ्यः समुपहृतवित्तैश्च कुहचित्
क्वचित्कीर्णं सैन्यैर्जयति सततं मन्त्रिभवनम् ।

अन्तेउरं तुण तुज्झ छायं एव्व अणुवट्टिस्सदि । जदो परमेसरकिवासेरदसावलंवो अमोहसमुग्गमो खु कलिलेकुलजणिदाणं मणरहो ॥

अत्र क्वचिद्विद्वदित्यादिना वर्णचतुष्टयसंहरणाद्वर्णसंहारो नामाङ्गम्

चातुर्वर्ण्योपगमनं वर्णसंहार इत्यपि । इति ।

परमेश्वरकृपेत्यादिना अरतेः शमनात् शमो नामाङ्गं सूच्यते ।

अरतेः शमनं यत्तच्छममाहुर्मनीषिणः । इति ।

राजा—तर्हि वयस्य—

प्रथमं दिग्जयलक्ष्मीसङ्ग्रहणे तेन मन्त्रिणेव मम ।
सम्प्रति करणीयेऽस्मिन्भवता भवितव्यमपि सहायेन ॥

विदू—एसो सज्जोह्मि आणादाणेण मं बहुमण्णेहि ।

---

( छा ) रक्तारक्तप्रकृतिमण्डलस्य राज्ञो रीतिः खल्वेषा कार्यासनारोहणाभावे विविधोपसर्गसमुद्गमसम्भावना नाम, त्वया पुनर्लीलयैव वशीकृतत्रैलोक्यविजयलक्ष्मीकतया कृतकर्तव्येन कथं तथा स्थातुं न शक्यम् । यस्य खलु भवतः सचिवायत्तीकृतसिद्धेः रघुपतेरिव सुमन्त्रो मन्त्री निपुणस्तिष्ठति ।

( छा ) पश्य प्रभुत्वं सचिवस्य ।

(छा) अन्तःपुरं पुनस्तव छायामेवानुवर्तिष्यति, यतः परमेश्वरकृपास्वैरदशावलम्बोऽमोघसमुद्गमः खलु कलुले कुलजनितानां मनोरथः ।

(छा) एष सज्जोऽस्मि । आज्ञादानेन मां बहुमन्यस्व ।

अनेन इष्टजनानुनयसूचनात्पर्युपासनं नामाङ्गम् ।

इष्टस्यानुनयो यः स्यात्पर्युपासनमीरितम् ॥

अहवा—जाणिदेवि अत्थे किं आणादाणेन, झटिदि तं इत्थिअं तुह-अङ्काभरणीकरिअ दुवेणं वि तुह्माणं सव्वहा भद्दं भणिस्सं ।

अनेन परिहाससूचनान्नर्म नामाङ्गम् ।

'परिहासप्रधानं यद्वचनं नर्म तद्विदुः ।' इति

राजा—(सप्रसादं विलोकयन्साशंसम् ) ।

सा पुनरलघुनितम्बा
स्नेहव्रीलार्धविकसितापाङ्गा ।
अङ्कं प्रसादयति चे-
दलमलमन्येन वैभवेन मम ॥

इति द्विस्त्रिर्वदति ।

अत्र सप्रसादं विलोकयन्नित्यनेन अनुरागोद्घाटकवचनेन प्रीत्यतिशयसूचनान्नर्मद्युतिर्नामाङ्गम् ।

अनुरागोद्घाटनोत्था प्रीतिर्नर्मद्युतिर्मता । इति ।

विदू—कहं मिच्छारूवतरुणिं अक्खिगोअरं विअ करीअ कुदो एवं अहिणंदेसि ।

अनेन मिथ्याप्रदर्शनव्याजेन हितात्मकानन्दस्य निरोधसूचनान्निरोधो नामाङ्गम् ।

हितरोधो निरोधः स्याच्छद्मना येन केनचित् । इति

राजा—अरे कथमनृतमिश्रितमभिधत्से ।

शृणु—गुर्वी नितम्बजघने निबिडा कुचयोश्च नयनयोर्विपुला ।
अत्यायता च वेण्यामवलग्ने भवतु सा तु मिथ्यैव ॥

विदू—जयि परमत्था तइ तये अणदिमुत्तबालबाहाए होदव्वम् अण्णह उण अअक्कन्तलोहरेहा विअ दंसणेणेव्व महुरदंसणं तुमं कहं णो उवसरइ

( छा ) अथवा ज्ञातेऽप्यर्थे किमाज्ञादानेन, झटिति तां स्त्रियं तवाङ्काभरणीकृत्य द्वयोर्युवयोः सर्वदा भद्रं भणिष्यामि ।

( छा ) कथं मिथ्यारूपतरुणीमक्षिगोचरामिव कृत्वा कुत एवमभिनन्दसि ।

( छा ) यदि परमार्था तदा तयाऽनतिमुक्तबालभावया भवितव्यम् । अन्यथा पुनरयस्कान्तलोहरेखेव दर्शनेनैव मधुरदर्शनं त्वां कथं नोपसरति ।

राजा—सत्यमाह भवाननतिमुक्त एव बालभावस्तस्याः। तथाहि।

कान्तिः काऽपि पदं ददाति मृदुलेष्वङ्गेषु लोलभ्रुव-
स्तस्याः किं च गतागतैश्च शनकैरभ्यस्यते मन्दता।
धत्ते नेत्रयुगं च दुग्धधवलं काश्चित्प्रसादश्रियं
तन्मन्ये स्पृशति प्रिया मम मनस्संजीवनं यौवनम्॥

अत्र राजविदूषकोक्तिभिः कान्तानुरागप्रकाशनात् प्रगमो नामाङ्गम्।

रागप्रकाशः प्रगम उत्तरोत्तरभाषणैः॥ इति॥

विदू—अवि दिट्ठो तुए मंजिट्ठाराअसरिसो तस्सा अणुराओ। जदो 'मम मनस्संजीवनं यौवन'मिति सिद्धकज्जो विअ कहेहि।

राजा—धिक् धिक् तमेव ननु कापुरुषं वधूनां
यस्तु स्वभावलसनामपि विभ्रमाणाम्।
स्वस्मादनन्यभवतामभिमन्यमानो
मुह्यन्मुदं वहति मूढजनाग्रगण्यः॥

अत्र कान्तानुरागभ्रमेण मुदितेषु मूढेषु नैष्ठुर्यप्रकाशनाद्वज्रं नामाङ्गम्।
वज्रं तदिति विज्ञेयं यत्तु निष्ठुरभाषणम्।

विदू—तइ ताए इड्डिआए सक्खा लच्छीए रूवन्तरेण होदव्वम्। अण्णहा उण सिविणअम्मि असाहारणीसु तरुणीसु वि मानसीसु विमुहस्स दे रण्णो कहं सेराणुबन्धो ताइं अणुराओ हवे।

अत्र लक्ष्म्या रूपान्तरपरिग्रहणमेव राजानुरागहेतुरिति सूचनादुपन्यासो नामाङ्गम्। उपन्यासोऽनुरागस्यहेतुप्रकटनं वचः इति।

राजा—स्थाने तव वचनम्। तथा हि—

सौभ्रात्रं सुरवीरुधां कथयति व्यक्तं स्वदोर्विक्रमैः
सागर्भ्यं प्रकटीकरोति हि गलोल्लासेन कम्बोरपि।
सौन्दर्यं च मुखश्रिया विशदयत्यापूर्णचन्द्रस्यय-
नूनं सा रमणी विशुद्धयशसो रत्नाकरस्यात्मजा

---

(छा) अपि दृष्टस्त्वया मञ्जिष्ठारागसदृशस्तस्याअनुरागः। यतो मम मनस्सञ्जीवनं यौवनमिति सिद्धकार्य इव कथयसि।

(छा) तदा तया स्त्रिया साक्षाल्लक्ष्म्यारूपान्तरेण भवितव्यम्। अन्यथा पुनः स्वप्नेऽपि असाधारणीष्वपि मानुषीषु विमुखस्य ते राज्ञः कथं स्वैरानुबन्धस्तस्यामनुरागो भवेत्।

विदू—जइ सा रअणाअरकण्णआ तइ पुरुसुत्तमेण तुए एव्व परिक्खिअ अहरेण वि इमा सुहासोदरत्तणं पअडेदित्ति जाणिदव्वा भविस्सदि । होदु कहिं दिट्ठपुव्वा कहं वा अणुराअचिण्णाइं ।

राजा—यदि कुतूहलमनुक्रमेण श्रूयताम् †अपि स्मरसि सखे मृगयां पर्यटिष्यामि ।

विदू—आम जदाखु मए केत्तिअपदाइं तुमं एव्व अनुसरन्तेण मज्झे मग्गं सावदकोलाहलं सुणिअ वेवन्तेण किंवि सेलकन्दरं पविसिअ तुज्झ आअमणपेरन्तं अभयुप्पादअममिअमिच्चञ्जअं आवट्टन्तेण ठिअमासी ।

राजा—ततो मृगयानिवृत्तो दूरविकीर्णपरिजनः ककुद्गिरिपरिसर एव कमपि सरःप्रान्तमतिश्रान्ततया यावदध्यवसायं(वसं ?)तावदेव ।

मात्रा दत्तं स्तन्यमप्यर्धपीतं
मुक्त्वा दूरं संभ्रमस्तब्धकर्णाः ।
पुञ्जीभूय प्रोन्नमत्कण्ठनालाः
प्रान्ते चेरुः केऽपि सारङ्गशावाः ॥

विदू—ता सविहे एव्व एक्काए कन्ताआ(ए ?) उवक्कन्दसङ्गीदाए होदव्वं । आजम्मसिद्धो अच्चादरो खु गीदिसु मिआणं ।

राजा—तानहमप्यन्वसरम् । ते च भगवतीभवनपर्यन्तसञ्चारमहिम्नेत्व कदाऽप्यपरिचितशङ्कात्रासतमोगन्धा धनुष्मता मयाऽनुसृताअप्यभिन्नगत यस्तद्गिरेरधित्यकामधिरुह्य गौरीगृहप्राङ्गणगतसुवर्णाब्जिनीतटमन्दारवाटिकामूलमध्यतिष्ठन् ।

विदु—तुए वि तह एव्व किदं तदो तदो ।

राजा—स्वर्णाम्बिकामम्बरकुन्तलस्य
गङ्गाधरस्याङ्कमहार्घरत्नम् ।

---

( छा ) यदि सा रत्नाकरकन्यका तदा पुरुषोत्तमेन त्वयैव परीक्ष्य अधरेणाप्येषा सुधासोदरत्वं प्रकटयतीति ज्ञेया भविष्यति । भवतु कुत्र दृष्टपूर्वा सा कथमनुरागचिह्नानि ।

† अत्र पर्यटिष्यमीति भूतार्थो लृट्प्रयोगः स्मृधातुयोगप्रयुक्तः अभिज्ञासूचकः ।

( छा ) आम् यदा खलु मया कियत्पदानि त्वामेवानुसरता मध्ये मार्गे श्वापदकोलाहलं श्रुत्वा कमपि शैल कन्दरं प्रविश्य वेपमानेन तवागमनपर्यन्तं अभयोत्पादकममृत मृत्युञ्जयमावर्तयता स्थितमासीत् ।

( छा ) तत्सविध एव एकया कान्तया उपक्रान्तसङ्गीतया भवितव्यम् । आजन्मसिद्धोऽत्यादरः खलु गीतिषु मृगाणाम् ।

( छा ) त्वयाऽपि तथैव कृतं ततस्ततः ।

गौरीं प्रणन्तुं प्रियभाषिणीभिः
सखीभिरायादथ काऽपि कान्ता ॥

विदु—तए एव्व दे जीविआए होदव्वं ।

राजा—स्वनेत्रलीलापुनरुक्तमीने
सा तत्र तस्मिन्सरसि प्रसन्ने ।
स्नाताऽनुलिप्ता च विभूषिता द्रा-
गामज्जयन्मामपि मोहसिन्धौ ॥

विदु—होदु सा एव्व णिअकुअकुम्भपरिग्गाहणेण तारिससिन्धुणो उत्तारयिस्सदि ।

राजा—गौरीसमक्षमथ वादयितुं विपञ्चीं
हस्तेन मञ्जुलरणन्मणिकङ्कणेन ।
अङ्गुष्ठतर्जनियुगेन विमृज्य तन्त्री-
र्व्वास्फाल्य सा नखमुखेन परीक्षते स्म ॥

विदू—दा(था?)णे खु इमे वैणिआणं संपदाओ ।

राजा—ततश्च सा परिसरवर्तिनीभिर्मयि विस्मयविकीर्णनेत्रोत्पलाभिः सखीभिरयि प्रियसखि विचित्रं ते रागकौशलम्, यदितः त्वद्रागसमाकृष्ट-हृदयः कुरङ्गनिकरोऽयं भवत्परिसरं न मुञ्चति, पश्येति, सस्मितव्याजं दर्शितं मामतिलङ्घितामृततरङ्गैरपाङ्गैरभिषिक्तवती ।

वि—तइ तुए बंह्राणन्दो वि अयरीकिदो हवे ।

राजा—सखे ननु तथैव कथयिष्यामि ।
लिप्ये तदानु कर्पूरैर्लिह्ये नु जलदोदरैः
सिच्ये नु चंद्रिकासारैरित्यमन्यत मे मनः

विदू—वअस्स विम्मअसम्भमसमाइण्णएअराणं उल्लसन्तभूणच्चणप्पउ-णिआणं तिहुवणीजुवहिअअचट्ठिहाअणवारणबन्धणनीलमणिसिङ्खआणं तिभा-अविक्खणाणं पहावो एसो ।

---

(छा) तयैव ते जीविकया भवितव्यम् ।

( छा ) भवतु सैव निजकुचकुम्भपरिग्राहणेन तादृशसिन्धोरुत्तारयिष्यति ।

( छा ) स्थाने खल्वयं वैणिकानां संप्रदायः ।

( छा ) तर्हि त्वया ब्रह्मानन्दोऽप्यधरीकृतो भवेत् ।

( छा ) वयस्य विस्मयसंभ्रमसमाकीर्णकेकराणामुल्लसद्भूनर्तनप्रगुणितानां त्रिभुवनयुवहृदयषाछिहायनवारणबन्धननीलमणिश्रृङ्खलानां त्रिभागवीक्षणानां प्रभाव एषः ।

राजा—ततश्च कानपि क्षणानमन्दानन्ददायिनस्तत्रैव विलासविलोकनैरेव संभावयन्ती जनमिमत्रान्तरेण तावदम्बिकामध्याह्नसेवावसरमौहूर्तिकमाङ्गल्यमृदङ्गमाकर्ण्य सखीभिः सह कथञ्चिदुत्थाय विवलितकन्धरं मन्दमन्दविन्यासमृदुतरशिञ्जानमणिमञ्जीरं जगन्मातुरालयपरिसरमधिगतवती । गमनसमयेऽपि तरलाक्षी मय्येव—

क्वचिद्वलितकन्धरं क्वचिदुदीतमन्दस्मितं
क्वचित्तरलितत्रपं क्वचिदुपानमद्भ्रूलतम् ।
क्वचिच्च जनितस्मरं क्वचन पक्ष्मपातालसं
प्रतिक्षणविलक्षणं विकिरति स्म सा वीक्षणम् ॥

अनेन चन्द्रकलायाः सविशेषानुरागप्रकाशनात् पुष्पं नामाङ्गम् ।

सविशेषोऽनुरागस्य प्रकाशः पुष्पमीरितम् । इत्येतानित्रयोद शाङ्गानि ॥

वि०—अवि सहीहिं वि जाणिदं तस्सा हिअअं ।

राजा—तत्पुनराकर्ण्यताम् । ततश्च समुद्लसन्नत्यन्तललितानि सखीनां परिहसितभाषितानि ।

विदू—किंति

राजा—अयि सखि सत्वरमम्बिकामाराध्य निवर्तमाना पुनरचिरादेव तव कुचकुड्मलाश्लेषदोहलभागधेयेन सुमनोहर्षोद्गममाशासानस्य परिसरवर्तिनः कुरवकपादपस्य मनोरथमभिपूरयेति ।

विदु—किं कहिदं तइ ताए ।

राजा—आकूतमात्मनिहितं स्फुटमालपन्ती—
रालीरपास्तपरुषा परितर्जयन्ती ।
आनन्दवर्धिततनुः श्लथनीविबन्धा
लीलाम्बुजेन मृदुलं समताडयच्च ॥

विदु—अहो सव्वप्पयारमहुरो सो खु ललणाणं वओबन्धो ।

राजा—( साशङ्कम् )

अर्धाधैर्व्यञ्जितानङ्गलीलाडोलायितत्रपम् ।
वयो नु भोक्तुं(क्तुः?)तन्वङ्ग्याः किञ्चि(दे ?)वेन्द्रवैभवः(वम् ?) ॥

( छा ) अपि सखीभिरपि ज्ञातं तस्या हृदयम् ।

( छा ) किमिति ।

( छा ) किं कथितं तदा तया ।

( छा ) अहो सर्वप्रकारमधुरः खलु ललनानां वयोबन्धः ।

विदू—तंवि तुमं मोक्कूण कस्स भविस्सदि ।

राजा—अये कृतं कृतं त्यक्तानुवर्तनेन ।

विदू—अणन्तरं जाणिदं इदो भवं आअदो ।

राजा—अथकिम् ( सविषादम् ) तदाप्रभृत्येवमुद्भ्रमामि ।

द्रष्टुं न क्वाऽपि चक्षुः प्रसजति लगतो नैव कुत्रापि कर्णौ
वाचामाकर्णनाय त्रुटति च हृदयं कोऽपि तापातिरेकः ।
अङ्गान्यङ्गारतीव्रैस्तपति च विशिखैर्दारुणः पञ्चबाण
स्तत्केनाश्वासयिष्ये कथमतनुरुजः पारमालोकयिष्ये ॥

वि०—केण आससणिज्जो भविस्ससि, इदो एक्कं णिसं अदिवाहेहि । सुवो अहं मज्झण्णन्तरादो पुडमं एव्व दे इच्छिअसिद्धिं झत्ति संपादयिइस्सं ॥

अनेन प्राप्त्यनुकूलव्यापारकथनादर्थावस्था सूचिता । तदेवं बिन्दुप्रयत्नयोः सम्बन्धः साङ्गः प्रतिमुखसन्धिः ।

'प्रयत्नस्तु फलाप्राप्तौ व्यापारोऽतित्वरान्वितः ।' इति

राजा—अये क्षणमपि निस्सहमदनावेगस्य मम कथमेकरजन्यतिवाहनं नाम ।

वि०—होदु धीरत्तणं । ( प्रतीचीं निर्दिशन् ) पेक्ख दाणिं । अत्थाअलसिहरङ्कणमोलम्बइ भअवं भाणुमन्तो ।

नेपथ्ये वैतालिकाः । सुखाय देवस्य भवतु सन्ध्यासमयः । अद्य हि—

मीलन्त्यम्बुरुहाणि मन्दमरुतः केचिद्वलन्तेऽभितः
किञ्चिद्वर्ति(र्धि ?)तकैरवा मृगदृशामुद्दामरोषापहाः ।
राजन्ते च गृहे गृहे प्रकटितालोकाः प्रदीपा विभोः
कन्दर्पस्य समन्ततः प्रसृमरा यद्वत्प्रतापाङ्कुराः ॥

राजा—( आकर्णयन्नग्रतश्चक्रवाकं विलोक्य सकरुणम् )

अहमिव चक्रयुवैष प्रगुणितनिर्व्याजरागभरितायाम् ।
योषिति तिरोहितायां भ्राम्यति मुह्यत्युदीक्षते च दिशः ॥

---

( छा ) भवतु धैर्यम्, पश्येदानीमस्ताचलशिखराङ्कणमवलम्बते भगवान् भानुमान् ।

( छा ) तदपि त्वां मुक्त्वा कस्य भविष्यति ।

( छा ) अनन्तरं ज्ञातमितो भवानागतः ।

( छा ) केनाश्वासनीयो भविष्यसि, इत एकां निशामतिवाह्य श्वोऽहं मध्याह्नान्तरादेव प्रथमं ते इष्टसिद्धिं झटिति संपादयिष्ये ।

वि०—होदु तस्स तुह वि मणरहपूरणसमओ अइरादो भविस्सदि। दाणिं संझंवन्दिदुं अब्भन्तरं पविसंहो।

राजा—तथेति ( निष्क्रान्ताः सर्वे )

इति चन्द्रकलाकल्याणे

द्वितीयोऽङ्कः

अथ तृतीयोऽङ्कः।

ततः प्रविशति चन्द्रकलायाः सखी।

अयंप्रवेशकः। तल्लक्षणं चाग्रे वक्ष्यति।

सखी—अंहहे भट्टिदारिआए चंदकलाए पवेसणत्थं पेरन्तपमदवणमज्झगअं णोमालिआघरं सज्जीकरेहित्ति उज्जाणपालिअं वसन्तसेणं कहिदुं पेसिदा कुदो मञ्जरी चिरअदि ( किञ्चिद्गत्वा ) इदो एसा भट्टिदारिआभवणवट्टंताणं केलिसुअसारिआमोराणं पडिसाअम्पच्चूसं वसाणुलेवणफलवितरणलीलालावसिक्खणणच्चणाहिआरणिजुत्ता विअक्खणा चिट्ठइ। जाव णं मञ्जरीं आणेदुं णिओजेमि ( इति परिक्रामति ) कहं एसा मदगहीदा विअ अद्धमीलिदलोअणा पदे पदे खलन्तसिंजिअमञ्जीरमंजुलचरणविण्णासं ईसीसगलन्ताजाणिअकुअकोरअञ्चिअकञ्चणचेलञ्चलं चिट्ठइ। ता णं पच्चा गदुअ विणोदेमि। ( इति पश्चाद्गत्वा तद्वेणिकाकर्षणमभिनयति )

ततः प्रविशति सख्याऽऽकृष्यमाणवेणिका विचक्षणा अर्धनिमीलिताक्षी।

रे मऊरापसद णखु एसा कालभुअङ्गी। किं उण मह वेणीआ। ता किस णं आअरससि

(इत्युत्स्वमायते।)

अत्र—भर्तृदारिकायाः प्रवेशनार्थं पर्यन्तप्रमदवनेत्यनेन राज्ञा पूर्वोक्ते

---

( छा ) तस्य तवापि मनोरथपरिपूरणसमय अचिरादेव भविष्यति। इदानीं पुनः सन्ध्यां वन्दितुमभ्यन्तरं प्रविशावः।

( छा ) अहो भर्तृदारिकायाश्चन्द्रकलायाः प्रवेशनार्थं पर्यन्तप्रमदवनमध्यगतं नवमालिकागृहं सज्जीकुर्वेति वसन्तसेनामुद्यानपालिकां कथयितुं प्रेषिता मञ्जरी कुतश्चिरयति। इत एषा भर्तृदारिकाभवनवर्धमानानां केलीशुकशारिकामयूरादीनां प्रतिसायंप्रत्यूषं वचानुलेपनफलादिवितरणलीलालापशिक्षणनर्तनाधिकारनियुक्ता विचक्षणा तिष्ठति। यावदेनां तामानेतुं नियोजयामि। कथं मदगृहीतेवार्धमीलल्लोचना पदे पदे स्खलच्छिञ्जानमञ्जरीचरणविन्यासं ईषदीषद्गलित कुचकोरकाञ्चितकाञ्चनचेलाञ्चलं तिष्ठति। तदेनां पश्चाद्गत्वा विनोदयामि।

( छा ) रे मयूरापसद न खल्वेषा कालभुजङ्गी। किं पुनर्मम वेणिका। तस्मात्कस्मादेनामाकर्षसि।

दर्शितस्य तत्रैव सञ्ज्ञं वंदिदुमित्यादि विदूषकवाक्येन व्यवहितस्य नायिका-कथारूपवस्तुनः सख्युक्तिव्याजेनान्वेषणात् गर्भसन्धिरयम् ।

'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।

द्वादशाङ्गः पताका स्यान्न वा प्राप्तेस्तु सम्भवः ॥'

मञ्जुवचना--जस्स जणस्स जस्सिं अहिओ परिअओ सो एव्व तं सव्वहा ण मुञ्चेहि जदो णिरन्तरसञ्जादमोरपरिअआ अणुरूव्वं एव्व कहेहि । होदु णं अप्फालिअ बोहिस्संमि ।

अनेन तत्त्वार्थस्य सूचनान्मार्गो नाम गर्भसन्धेरङ्गम् ।

तत्त्वार्थकथनं यत्स्यात्कविभिर्मार्ग ईरितः ।

( इति तां सम्यक् अङ्गैश्चलयति )

विचक्षणा—( ससम्भ्रममुद्बुध्य ) कहं मञ्जुवअणा ।

मञ्जु०—अयि मज्झण्णप्पाए वि दिवहे कहं महत्तिया णिद्दाए ण मुञ्चसि

विचक्षणा—( सनिर्वेदम् ) सहि परतन्तत्तणं खु सुहलेसम्मि विरुज्झइ । अदो हिओ अहिणिव्वट्टिअं केलीसुआदिवावारं भट्टिदारिआए णिवेदेदुं आगदुअ समआलाहेण विसज्जिअणिद्दं पडिवालअन्दीए मह सिमसिमाइदेसु अच्छिसु पच्चूसपिसुणो ओइण्णो एव्व पुव्वदिसामुहपण्डुभावो । तदो सुवो करणिज्जं करिअ णिओअजुअं वि भट्टिदारिआए णिवेदिअ सेरं घरे सुवावं करिस्सं ( इति किञ्चिद्गच्छति )

मञ्जु—अइ दाणिंवि णसमअलाहो कुदो गमिस्ससि ।

विच—अइ मञ्जुवअणे हिअएण मह अहिण्णा खु तुमं । ता कहेहि

( छा ) यस्य जनस्य यस्मिन्नधिकः परिचयः स एव तं सर्वथा न मुञ्चति । यतो निरन्तरसञ्जातमयूरपरिचया ऽनुरूपमेव कथयति । भवत्वेनामास्फाल्य बोधयिष्यामीति ।

( छा ) कथं मञ्जुवचना ।

( छा ) अयि मध्याह्नप्रायेऽपि दिवसे कथं महत्या निद्रया न मुच्यसे ।

( छा ) सखि परतन्त्रत्वं खलु सुखलेशेऽपि विरुद्धयति । अतो ह्यः अभिनिर्वर्तितं केलीशुकादिव्यापारं भर्तृदारिकायै निवेदयितुमागत्य समयालाभेन विसृष्टनिद्रं प्रतिहार एव प्रतिपालयन्त्या मम सिमसीमायितयोरक्ष्णोः प्रत्यूषपिशुनोऽवतीर्ण एव पूर्वदिङ्मुखपाण्डुभावः । ततः श्वः करणीयं कृत्वा नियोगयुगमपि भर्तृदारिकायै निवेद्य स्वैरं गृहेस्वापं करिष्ये ।

( छा ) अयि इदानीमपि न समयलाभः कुतो गमिष्यसि ।

( छा ) अयि मञ्जुवचने हृदयेन ममाभिन्ना खलु त्वं तत् कथय या पुनः प्रत्यहमर्धरात्रपर्यन्तं लीलाशुकादिव्यापारेणैव मया सह विहरति । तस्या एव भर्तृदारिकाया दर्शनमपि कथमभ्यर्थनीयमासीत् ।

जा उण पच्चहं अद्धरत्तपेरन्तं लीलासुआदिवावारेण मए सह विहरेइ। तासि भट्टिदारिआए एव्व दंसणं वि कहं पत्थणिज्जं आसी।

मञ्जु—(विहस्य) अयि मुद्धे किंञ्चि वि अविआरियघरअभ्यन्तरकज्जर-हस्साऽसि।

विच—( सकोपम् ) कथं मुद्धम्हि। विआरिदो एव्व सव्ववुतंतोअम्भ-न्तरादो वसन्दसेणं उवगदाए मञ्जरिए मुहादो, किं उण अन्तेउररहस्सं जाणिदं वि गोवणिज्जं सुहं ति मुद्धत्तणं अहिणेमि।

मञ्जु—तइ परिण्णादसअलउत्तन्ताए तु ह पुणरुत्तं एव्व मए कहणिज्जं।

विचक्षणा—तहवि भट्टिदारिआसुहवुत्तन्तो सदसो सुणिदो वि कोदुअं करेदि। कहेहि दाव।

मञ्जुवचना—कहेमि, ण खु एत्थ अण्णो जणो, जस्स मुहेण विअडिअं भवे रहस्सं।

अनेन शङ्कासूचनात् संभ्रमो नामाङ्गं सूच्यते। 'शङ्कात्रासौ च संभ्रमः'। इति।

विचक्षणा—ण खु एद्ध लीलए एव्व रहस्सचोरअं पेक्खाहरं णाम सुअं वज्जिअ अण्णो।

मञ्जु—अदो एव्व णं सव्वहा हत्थे करेहित्ति तुह वि अम्भन्तरप्पवेसणं सा तवस्सिणी णाणुमण्णेइ।

विचक्षणा—तलिहि णं भट्टिणीए चन्दसालासिअरलम्बिए पञ्जरे करिस्सं। ( इति तथा कृत्वा ) इदो परं कहेहि।

मञ्जु—किं उपक्कमिअ।

---

( छा ) अयि मुग्धे किञ्चिदप्यविचारितगृहाभ्यन्तरकार्यरहस्यासि।

( छा ) कथं मुग्धाऽस्मि विचारित एव सर्ववृत्तान्तोभ्यन्तराद्वसन्तसेनामुपगताया मञ्जर्या मुखात् किं पुनरन्तः-पुररहस्यं ज्ञातमपि गोप्यमानं शुभमिति मुग्धत्वमभिनयामि।

( छा ) तदा परिज्ञातसकलवृत्तान्तायाः तव पुनरुक्तमेव मया कथनीयम्।

( छा ) तथाऽपि भर्तृदारिकाशुभवृत्तान्तः शतशः श्रुतोऽपि कौतुकं करोति कथय तावत्।

( छा ) कथयामि नखल्वत्रान्यो जनो यस्य मुखेन विघटितं भवेद्रहस्यम्।

( छा ) न खल्वत्र लीलयैव रहस्यचोरं प्रेक्ष्याधरं नाम शुकं वर्जयित्वाऽन्यः।

( छा ) अत एवैनं सर्वदा हस्ते करोषीति तवाभ्यन्तरप्रवेशनं सा तपस्विनी नानुमन्यते।

( छा ) तदेनं भट्टिन्याश्चन्द्रशालाशिखरावलम्बिते पञ्जरे करिष्यामि। इतःपरं कथय।

( छा ) किमुपक्रम्य।

विचक्षणा—जदा खु मुहुरदंसणस्स कलुलेउलकलसजलहिपुण्णचन्दस्स णङ्गमहीवइणो दंसणजणिदउक्कण्ठाए सुवण्णंबिअं सेविअ घरअं गदाए तिस्सा कण्ण आए अन्तेउरं देवीपमुअसअलसंमदो एव्व पेक्खणअवुड्ढवहुवेसेण तस्स जणस्स अन्तरङ्गो तुए पवेसिओ, अदो आरहिअ ।

अनेन देवीप्रमुखेषु वञ्चनासूचनादधिबलं नामाङ्गम् ।

बुधैरधिबलं प्रोक्तं कपटेनाभिवञ्चनम् ।

मञ्जु—तदो कञ्चिकालं कोरइदकदम्बविडम्बअकवोलबिम्बं सुणन्तीए तिस्सा समक्खएव्व कज्जसिद्धिं णिड्डारिअ पुणो विसज्जिओ ।

विच—पअडिदं मञ्जुवअणत्तणं होदु कहं कज्जसिद्धि ।

मञ्जु—सुमेरसि तं कुरवअरुक्खं ।

विचक्षणा—आम जस्स खु दोहलकरणनिओअमिसेण तस्स णङ्गमहीवइणो मणरहपूरणं भट्टिदारिअं उद्दिसिअ पत्थिदं आसी ।

मञ्जु—दाणिंवि तं एव्व दोहलं मिसीकरिअ दुवेणं चंदकलाणंजमहीवइणं अण्णोण्णाहिलसिओ दंसणमहूसवो कारज्जिसदित्ति ।

अनेन दोहदं व्याज एवेति कथनादभूताहरणं नामाङ्गम् ।

अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् ।

विच—कुरवअसमीवट्ठिआणं वि ताणं तिलअरुक्खाणं सुमणविआसोपाओ किं ण रइदो ।

मञ्जु—सो उण पेक्खणमेत्तसुलहो अत्थादो एव्व भविस्सदि ।

---

( छा ) यदा खलु मधुरदर्शनस्य कलुलेकुलकलशजलधिपूर्णचन्द्रस्य नङ्गमहीपतेर्दर्शनजनितोत्कण्ठायाः स्वर्णाम्बिकां सेवित्वा गृहं गतायास्तस्याः कन्यकाया अन्तःपुरं देवीप्रमुखसकलसंमत एव प्रेक्षणकवृद्धवधूवेषेण तस्य जनस्यान्तरङ्गस्त्वया प्रवेशितः, तत आरभ्य ।

( छा ) ततः कञ्चित्कालं कोरकितकदम्बविडम्बककपोलबिम्बं शृण्वत्यास्तस्याः समक्षमेव कार्यसिद्धिर्निर्धार्य पुनर्विसृष्टः ।

( छा ) प्रकटितं मञ्जुवचनत्वं, भवतु, कथं कार्यसिद्धिः ।

( छा ) स्मरसि तं कुरवक वृक्षम् ।

( छा ) यस्य खलु दोहदकारणनियोगमिषेण तस्य नङ्गमहीपतेर्मनोरथपूरणं भर्तृदारिकामुद्दिश्य प्रार्थितमासीत् ।

( छा ) इदानीमपि तमेव दोहलं मिषीकृत्य द्वयोरेव चन्द्रकलानङ्गमहीपत्योर्दर्शनमहोत्सवः कारयिष्यते इति ।

( छा ) कुरवकसमीपस्थितानामपि तेषां तिलकवृक्षाणां सुमनोविकासोपायः किं न रचितः ।

( छा ) स पुनः प्रेक्षणमात्रसुलभ अर्थादेव भविष्यति ।

अत्र मञ्जुवचनामञ्जरीवाक्ययोरर्थशक्त्या तुल्यसंविधानमहिम्ना केषाश्चिद्राजसमीपवर्तिनां राज्ञां नयनविकासमात्रं नायकस्य तु फलमिति काचन भवित्री स्वयंवरकथा पताकास्थानकरीत्या सूच्यते । साऽपि फलपर्यन्तव्यासेः पताका ।

पताकास्थानकं तुल्यसंविधानविशेषणम् ।
'प्रतिपाद्यकथाङ्गं स्यात्पताका व्यापिनी कथा ॥'

विच—होदु अपि ताणं दंसणमत्तं आदु अण्णं ।

मञ्जु—पस्सणस्स वि उवाओ रइदो ।

विच—( सौत्सुक्यं ) अवि सा जाणादि ।

मञ्जु—णहि णहि, मञ्जरीचूडाकण्णआणं मम अ हिअअगदो अत्थो एव्व एसो ।

विच—कहं विअ ।

मुञ्जु—( कर्णे ) एवं विअ । ( इति कथयति )

विच—सुचिन्दिदं तइ एत्तिअं वेलं सो णंजमहाराओ सवयस्सो मिअआविहारमिसेण तहिं आअदो भवे ।

मञ्जु—अहइं ।

विच—तलिहि भट्टिदारिअं कहं ण तुवरेसि ।

मञ्जु—एसम्मि, होदि वि मञ्जरिं झत्ति आणेदु ।

---

( छा ) अपि तयोर्दर्शनमात्रं उतान्यत् ।
( छा ) स्पर्शनस्याप्युपायो रचितः ।
( छा ) अपि सा जानाति ।
( छा ) मञ्जरीचूडाकर्णयोर्ममच हृदयगतोऽर्थ एवैष्यः ।
( छा ) कथमिव ।
( छा ) एवमिव ।
( छा ) सुचिन्तितम् ।
( छा ) तर्हि एतावतीं वेलां नञ्जमहीपतिः सवयस्यो मृगयाविहारमिषेण तत्रागतो भवेत् ।
( छा ) अथकिम् ।
( छा ) तर्हि भर्तृदारिकां कथं न त्वरयसि ।
( छा ) एषाऽस्मि । भवत्यपि मञ्जरीं झटित्यानयतु ।

विच—( परिक्रम्य ) अइ मञ्जरी वि इदो सत्तरं आअच्छइ ता णिजोअन्तरं महं देसु । अत्र सञ्चिन्त्यमानस्य मञ्जर्यागमनरूपार्थस्य प्राप्तिकथनात् क्रमो नामाङ्गम् ।

क्रमःसञ्चिन्त्यमानार्थप्राप्तिरित्यभिधीयते ।

मञ्जु—तलिहि इदो णोमालिआघरआहिमुहगदं कुन्दलदामंटअं कञ्चणविदाणादिहिं सज्जीकरिअ तुरीअं आअच्छ अहं विभट्टिदारिअं पञ्चापइस्सं ।

विच—तह ( इति उभे निष्क्रान्ते )

प्रवेशकः ।

'वृत्तवर्तिष्यमाणानां कथांशानां निवर्तकः ।
प्रवेशकस्तु विज्ञेयो नीचपात्रप्रयोजितः ॥'

ततः प्रविशति यथानिर्दिष्टो राजा ।

राजा—सखे यथा कथञ्चिदम्बुजाक्ष्यास्तस्याः सन्दर्शनमेव वा संपादयेति मन्नियोगस्य संपादितप्रायं साफल्यमिति भवत्प्रतिभामभिनन्दामि ( परिक्रम्य ) आः कथमचिरेण ।

कान्तानुरागपिशुनैर्वचनैस्त्वदीयैः
प्राप्तोऽहमात्तकुतुकस्तमिमं प्रदेशम् ।
यस्मिन्भविष्यति मम प्रियया कुचाभ्या-
मासङ्गितः कुरवको नवकोरकश्रीः ॥

विदू—वअस्स ण केवलं चिन्दिदो उवाओ दस्सणस्स, जस्सिं लद्धे जोण्णारसमज्जणं वि अणादरणिज्जं भवे । तारिसस्स तिस्सा करकमलपस्सणस्सवि ।

राजा—साधु वयस्य चतुरोऽसि । अत्र ज्योत्स्नारसेत्यादिना प्रकृतकरकमलस्पर्शनस्य उत्कर्षसूचनादुदाहरणं नामाङ्गम् ।

---

( छा ) अयि मञ्जर्यपि इतः सत्वरमागच्छति, तन्नियोगान्तरं मह्यं देहि ।

( छा ) तर्हि नवमालिकागृहाभिमुखगतं कुन्दलतामण्डपं काञ्चनवितानादिभिः सज्जीकृत्य त्वरितमागच्छ । अहमपि भर्तृदारिकां प्रस्थापयिष्यामि ।

( छा ) तथा ।

( छा ) वयस्य न केवलं चिन्तित उपायो दर्शनस्य, यस्मिन् लब्धे ज्योत्स्नारसमज्जनमप्यनादरणीयं भवेत्, तादृशस्य तस्याः करकमलस्पर्शस्याऽपि ।

प्रस्तुतोत्कर्षवचनमुदाहरणमिष्यते।
नियुक्तोऽप्येकार्थे तदधिकमभीष्टं घटयते
जनो यः स श्रेष्ठश्चतुरचतुरो यस्तु कथितम्।
विधत्ते स्वाधीनं स किल चतुरो मध्यमगुणो
नयत्याशास्यान्यन्नियतमधमो यः स हि पशुः॥

विदू—इदो वरं इमाए सह तुमं एकाअंमि घटअन्तो चयुरतमत्तणं वि बहिल्लो भारं विअ वहिस्सं।

राजा—तर्हि इदं ते पारितोषिकम्। (इति स्वकण्ठादेकं मुक्ताहारमुन्मुच्य तत्कण्ठे करोति)।

विदू—सानन्दम् ( आत्मानं विलोक्य ) वअस्स रज्जलाहसमये रहुवइदिण्णेण हारेण हणूमन्तस्स विअ होदा विइण्णेण णेण हारेण अहिअं सो हन्दि मह अङ्गाइ।

राजा—अरे अलमात्मोचितेनाप्यप्रकृतेन परिहासितप्रस्तावेन। अयमिदानीम्।

सुभ्रुवः सरसकल्पवल्लिकापल्लवादपि मनोहरः करः।
स्प्रक्ष्यतीति ननु मां यदीरितं तत्कदा नु भवितेति शङ्कते॥

अनेन शङ्काकथनात् रूपं नामाङ्गं सूच्यते 'रूपं शङ्काकुलं वच, इति।

विदू—कुदो आसङ्का, णं अइरेण। संस्कृतमाश्रित्य।

अङ्केऽधिरोप्य वनितां नमिताननां ता-
मुल्लास्य सान्त्ववचनेन कपोलबिम्बे।
वक्त्रार्पणेन विरलय्य भयं च लज्जां
स्वाधीनयिष्यसि सखे स्मरराज्यलक्ष्मीम्॥

अनेन समाधिकथनात् सङ्ग्रहो नामाङ्गम्

समाधिकथनं यत्तु सङ्ग्रहः स उदाहृतः।

राजा—क इवाभ्युपायस्तस्या स्पर्शनमहोत्सवाय।

विदू—किं दाणिं पल्लविदेहिं वअणेहिं। ( अदूरे निर्दिशन् ) एदं भूसिदं कुन्दलदाघरअं तुमं पाविअ किआरूपेण एव्व तुह पच्चुत्तरइस्सं।

---

( छा ) इतःपरं अनया सह त्वामेकाहे घटयन् चतुरतमत्वमपि बलीवर्दो भारमिव वहिष्यामि।

( छा ) वयस्य राज्यलाभसमये रघुपतिवितीर्णेन हारेण हनूमत इव भवता वितीर्णेनानेन हारेणाधिकं शोभन्ते ममाङ्गानि।

( छा ) कुत आशङ्का नन्वचिरेण।

( छा ) किमिदानीं पल्लवितैर्वचनैः एतत् भूषितं कुन्दलतागृहं त्वां प्रापय्य क्रियारूपेणै तव प्रत्युत्तरयिष्ये।

राजा—(सवितर्कं स्वगतम् ।)

यद्भूषणं त्रिजगतामपि सा नतभ्रू-
यँद्भूषितं वदति चायमिमं निकुञ्जम् ।
यत्सिद्धवत्कथयते च समीहितं तत्
प्रायो मम प्रियतमा निवसेदिहैव ॥

अत्र लिङ्गेन गमकेन तन्निवासानुमानादनुमानं नामाङ्गम् ।

अर्थस्याभ्यूहनं लिङ्गमनुमानमुदाहृतम् ।

( प्रकाशं ) यद्रोचते भवते ( इति कुन्दलतागृहोपसर्पणमभिनयति )

विदूषकः—वअस्स इदोवरं जह मए णिउज्जिअए तह होदव्वंति तुमं अणुणेमि ।

राजा—विहस्य–इदमप्यर्थनीयम् ।

अव्याजमात्महितसङ्घटनोद्यतस्य
सख्युस्तवापि वचनं न कथं शृणोमि ।
पातुं स्वहस्तममृतं ननु दीयते चेत्
को वेतरं जगति पृच्छति जाततर्षः ॥

विदू—तलिहि णयरअमग्गगदे इह एव्व तं सहिओ तुह अङ्गपस्सणस्स आणइस्सदि

राजा—आकस्मिकं मम सखे घटते कथमद्य भागधेयमिदम् ।
अप्रज्ञेयानथवा ज्ञातुं को नाम कामदोर्विभवान् ॥

विदू—अदो एव्व माहणधणुषी मह हत्थे दाऊण पसूणमआइं सरसरासणाइं हत्थेसु धारेसु ।

राजा—(आत्मगतं) अये कौतुकपदमिदम् । ( प्रकाशम् ) कुतः (नेपथ्ये कलकलः )

विदू—इदो पेरन्तमग्गेण दोहलाअदाए कण्णआए ससहीए भवणकलहंसकण्ठस्सराणुसरिअणोउरसिंजिदं एदं । ता एद्धसुक्खणिबद्धजवणिअन्तरं

( छा ) वयस्य इतःपरं मया यथा नियुज्यसे तथा भवितव्यमिति त्वामनुनयामि ।

( छा ) तर्हि नगरमार्गपार्श्वगते इहैव तां सख्यस्तवाङ्गस्पर्शायानयिष्यन्ति ।

( छा ) अतएवैते मार्गणधनुषी ममहस्ते दत्वा प्रसूनमये शरशरासने हस्तयोर्धारय ।

( छा ) इतःपर्यन्तमार्गेण दोहलागतायाः कन्यकायाः ससख्या भवनकलहंसकण्ठस्वरानुसृतनूपुरशिञ्जितमेतत् । तदत्र सूक्ष्मनिबद्धयवनिकान्तरं प्रविश्य तासामागमननिर्गमनपर्यन्तं कन्दर्पप्रतिमेव निश्चलाङ्गस्तिष्ठ । अहं पुनरितोऽपसरामि ।

पविसिअ ताणं आगमणणिग्गमपेरन्तं कन्दप्पपडिमा विव णिच्चलङ्गो चिट्ठ अहं उण इदो ओसरामि ( इति निष्क्रान्तः )

राजा—( सविमर्शं स्वगतम् )

आदर्शनस्पर्शनमम्बुजाक्ष्यास्तस्या रतीशप्रतिमेव कामम् ।
निष्पन्दगात्रो निवसेति सख्या यदुक्तमास्तत्कथमाचरामि ॥

यदायतदृशस्तस्या दर्शने स्मरविभ्रमाः ।
उद्यन्तः प्रकृतारम्भं विरुन्धीरन्न संशयः ॥

तत्सर्वथैव—

दुःसाध्याअपि फलसाधनान्युपायाः सूच्यन्ते सकलजनेन लीलयैव ।
तत्सम्पादनसमये तु यः प्रयासो जानीते तमनुभवप्रवीण एकः ॥

भवतु यथा तथा वा ।

वयस्यकथितं कर्तुं सन्नह्यामि कथञ्चन ।
प्रयासेन विना कस्य घटते महितं सुखम् ॥

( परितो विलोक्य ) कथमवतीर्ण एव कुङ्कुमारुणाम्बराञ्चलालक्ष्यपयोधरयाऽपि सन्ध्यया । भवतु यवनिकान्तरं प्रविशामि । ( इति तथा स्थितः )
( ततः प्रविशति ससखीजना चन्द्रकला )

चन्द्रकला—हला मंजलिए केत्तिओ अन्तरो अहिगमिदुं अंह्माणं ।

राजा—( तां विलोक्य )

अये परिश्रान्तेव दृश्यते पद्मनयना तथा हि-

पादौ घर्मविलीढपल्लवरुचावूरू सकम्पौ कृशौ
मध्यो मन्मनसोपि कातरतरः स्रस्ताश्च दोर्विभ्रमाः ।
निश्वासश्चलदंशुकान्तनिपुणोन्नेयः स्तनस्पन्दनात्
मुग्धस्वेदकणं मुखं च कथयत्यायासमेणीदृशः ॥

सख्यौ—हला पस्सदो पेक्ख । तुह णअणसरणिलग्गो एसो ।

राजा—नयनसरणिलग्नो वर्तते पार्श्वतोऽसा-
विति वचनमुदीतं यत्सखिभ्यां सलीलम् ।
विमृशति तदिदं मामन्यमाहोस्विदित्थं
शिव शिव हृदयं मे संशये मग्नमास्ते ॥

( छा ) सखि कियानन्तरोऽधिगन्तुमस्माकम् ।
( छा ) सखि पार्श्वतः पश्य, तव नयनसरणि लग्न एवैषः ।

भवतु ज्ञास्यामि ।

चन्द्र—( सौत्सुक्यम् किञ्चिद्विमृश्य ) कहिं कहिं सो मह हिअअ ( इत्यर्धोक्ते स्वगतं ) कहं मुद्दा विवसम्हि । ( इति विरमति )

राजा—सरभसविस्तृतकुञ्चितनयनव्याख्यातमनसिजाकूता ।
अर्धोदितवचनसुधाकमनीयं किमपि विहृतमञ्जदृशः ॥

मञ्जु—( अपवार्य ) मञ्जरिए अवि दिट्ठो इमाए हिअअविलासो ।

मञ्जरी—( अपवार्य ) अयि कुदो णूदणा विअ विंहिदासि । जं उण एसा णअणसुहअरं णाहपडिच्छन्दअं सअं एव्व लिहिदं पेक्खन्दी विह्मअविह्मारिदणेत्तणीलोप्पलकन्तितरङ्गकवलिअसामिविलोलकण्णोप्पलं वीलासिणेहसज्झसकोदुअवेवहुसंभममहुरमुद्धप्पणामारम्भणिबद्धखिण्णकरकमलसंपुडघडणकणकणंतकंकणं अब्भुट्ठन्ती तुए एव्व केत्तिअवारे णिरोहिदा णासी ।

चन्द्र—( स्वगतं ) इमाहो मह चावलं किं वि चिन्दअन्दि, होदु । ( प्रकाशं ) सहि कहि मह हिअअप्पवड्ढन्तगुरुअराहिसंगाए वि अवज्जणिज्जआरो कुरवओ, कदा उण दोहदो करणिज्जोत्ति भट्टिणीए णिदेसो ।

मञ्जुवच—चन्दोदए एव्व ।

चन्द्रकला—अंहो ईरिसदसाइं सोवि भविस्सइ ।

राजा—ममाप्येवमात्तसाध्वसं मनः

उद्यन्नसावुत्पलमौननिद्राविद्रावणानां निकरैः कराणाम् ।
प्रागेव कामज्वररूषितं मां दोषाकरः किन्नु करिष्यतीति ॥

अनेन विप्रियत्वेन शत्रुभूताच्छन्द्रात् भयसूचनादुद्वेगोनामाङ्गं सूच्यते ।

शत्रुचोरादिसम्भूतं भयमुद्वेग इष्यते ।

---

( छा ) कुत्र कुत्र स मम स हृदय+ कथं मुधाविवशाऽस्मि ।

( छा ) मञ्जरिके अपि दृष्टोऽस्या हृदयविलासः ।

( छा ) अयि कुतो नूतनेव विस्मिताऽसि । यत्पुनरेला नयनसुखरं नाथप्रतिच्छन्दकं स्वयमेव लिखितं पश्यन्ती विस्मयविस्तारितनेत्रनीलोत्पल कान्तितरङ्गकवलितसामिविलोलंकर्णोत्पलं व्रीलास्नेहसाध्वसकौतुकवेपथुसंभ्रममधुरमुग्धप्रणामारम्भनिबद्धस्विन्नकरकमलसंपुटघटनकणकणायमानकङ्कणमभ्युत्तिष्ठन्ती त्वयैव कियद्वारं निरुद्धा नासीत् ।

( छा ) इमे मम चापलं किमपि चिन्तयतः । भवतु सखि कुत्र मम हृदय प्रवर्धमानगुरुतराभिषङ्गाया अप्यवर्जनीयाचारः कुरवकः । कदा पुनर्दोहदः करणीय इति भट्टिन्या निर्देशः ।

( छा ) चन्द्रोदय एव ।

( छा ) अहो ईदृशदशायां सोऽपि भविष्यति ।

मञ्जु—पिअजणसण्णिहिक्खु दे सुहोत्तेअओ भविस्सदि ता किदं सद्धसेण ।

राजा—ममाप्ययमेव कल्पः

चन्द्रकला—अवि सच्चं तं

राजा—उद्यद्भ्रूलघुनर्तनमुद्भ्रमितैकाङ्गुलि प्रसभम् ।

हरति मनो मम सुमुखी स्मरयन्ती किमपि वृत्तवृत्तान्तम् ॥

सख्यौ—अइ किं पुच्छेसि ।

चन्द्रकला—अवि सच्चं तुंह वअणं । सो राआ तहिं आअमिस्सइत्ति ।

राजा—किमिति वहसि शङ्कां तन्वि मय्युत्सुकेऽस्मिन्

अपि तव मृदुगुञ्जन्नूपुराकर्णनाय ।

अहमहमिह कुञ्जे कुञ्जरप्रार्थनीयैः

पदकमलविलासैः प्रान्तमेश्येहि कान्ते ॥

अथवाऽहमेवात्मानं दर्शयिष्ये । यद्वाऽलं चापलेन ।

सख्यौ—हला अंहे अलिअविण्णत्तिकारिणीओ णवेति तुअ हिअअं एव्व जाणादि ।

चन्द्रकला—तरिहि चंदुज्जेअपेरन्तं कहिं भविस्सं ।

मञ्जरी—एद्द सीअलणोमालिआघरए ।

चन्द्रकला—तह

[ इति ताभ्यां सह तत्रोपविशति ]

राजा—[ विलोक्य ] अद्य हि—

अन्धयति तिमिर निकर स्त्रिभुवनमभितोऽपि चित्रमिदमग्रे ।

अवतमसमेव कुञ्जं कञ्जदृशः कान्तिवैभवेनास्याः ॥

---

( छा ) प्रियजनसन्निधिः खलु ते सुखोत्तेजको भविष्यति । तत् कृतं साध्वसेन ।

( छा ) अपि सत्यं तत् ।

( छा ) अयि किं पृच्छसि ।

( छा ) अपि सत्यं युष्मद्वचनम्, राजा तत्रागमिष्यतीति ।

( छा ) सखि ! आवामलीकविज्ञप्तिकारिण्यौ न वेति तव हृदयमेव जानाति ।

( छा ) तर्हि चन्द्रोद्योग ( दय ? ) पर्यन्तं कुत्र भविष्यामः ।

( छा ) अत्र शीतलनवमालिकागृहे ।

सख्यौ—हला जाव णिविडतिमिरभेदिणो चन्दकिरणकन्दला पुव्वदिसं अलंकरेदि दाव अङ्गेसु दे दोहलोवजुत्ताइं भूसणाइं आमोअइस्संअ ।

चन्द्रकला—जं जं वो रुचइ तं तं कहं ण करिस्सइ ।

( सख्यौ अलङ्कुरुतः )

राजा—तां लोकभूषामपि भूषयन्त्यावायस्यतः केन मुधैव सख्यौ ।
यद्वा कथञ्चित्समयस्स तावान् क्षिप्तव्य इत्येव तयोः प्रयत्नः ॥

चन्द्रकला—हला मम हिअअंवि तुहे किस मं आआसेह ।

[ इति सन्तापमभिनयति ]

राजा—आः कष्टम् ।

मुक्ताहाराः प्रस्फुटन्ति स्तनाग्रे कर्णोत्तंसः शुष्यति न्यस्यमानः ।
लाक्षारागः प्राक्तनोऽप्यार्द्रमास्ते तन्मन्ये स्याद्दुर्वहः कामतापः ॥

मञ्जरी—[ अपवार्य ] अयि मञ्जुवअणे वड्ढंतस्य संदावस्स उवसमोवाओ किं ण चिंदिदो ।

मञ्जुवचना—[ अपवार्य ] एतं एव्व दाणिं पत्थावेदि [ चन्द्रकलां प्रति ] हला जाव दोहलसमओ दाव इह वणंकणे अदूरे पोरंगणाहिं जहविहि पडिट्ठाविआ कावि कदप्पपडिमा चिट्ठइ । सा उण उदक्कं सज्ज एव्व सूएइत्ति जणवादो, तं सेविअ आअइस्संह ।

चन्द्रकला—इदो उट्ठेमि । सरणिं दंसत ।

[ इति तथा करोति ]

सख्यौ—इदो इदो

राजा—काञ्चीघोषैः कामजैत्रप्रशस्तिं व्याकुर्वद्भिः कीर्णमञ्जीरनादैः ।

---

(छा) सखि ! यावन्निबिडतिमिरविभेदिनः चन्द्रकिरणकंदलाः पूर्वदिशमलंकुर्वन्ति तावदङ्गेषु ते दोहदोपयुक्तानि भूषणानि आमोक्ष्यावः ।

(छा) यद्यद्वो रोचते तत्तत् कथं न करिष्यथ ।

(छा) सख्यौ ! मम हृदयमपि युवां कस्मादायासयथः ।

(छा) अयि मञ्जुवचने ! वर्धमानस्य सन्तापस्योपशमोपायः किं न चिन्तितः ।

(छा) तमेवेदानीं प्रस्तावयिष्यामि ।

(छा) सखि । यावद्दोहदसमयः तावदिह वनाङ्कणे अदूरे पौराङ्गनाभिर्यथाविधि प्रतिष्ठापिता कापि कन्दर्पप्रतिमा तिष्ठति । सा पुनरुदर्कं सद्य एव सूचयतीति जनवादः । तां सेवित्वाऽऽगमिष्यामः ।

(छा) इत उत्तिष्ठामि । सरणिं दर्शयनाम् ।

(छा) इत इतः ।

मन्दं मन्दं मत्समीपं व्रजन्ती सैषा योषा तोषयत्यन्तरङ्गम् ॥

सख्यौ—हला कुंदलदाघरअसुक्खजवणिअंतरपडिबिंबिअं पेक्ख चउरसिप्पिविहिकरकोसलम् ।

[ संस्कृतमाश्रित्य ]

नवेन्दुकान्तप्रविभक्तगात्रः सुश्लिष्टवर्णो धृतरूपरेखः ।
सुराङ्गनानामपि मोहनीयः स एव साक्षादिह पुष्पधन्वा ॥

चन्द्रकला—[ सख्यौ प्रत्यपवार्य ] स एव्व कीस इह पुप्फधणुहो होदि ।

सख्यौ—[ स्मितं कृत्वा ] अयि सद्दच्छलेण वंचिदासि ।

जहविहि चंदसिलाहिं रइआ पडिमा इअं खु राएण ।
कप्पिअसोहारुइरो विदिओ पडिभाइ सुमधणुव्व पुरो ॥

किं इमिणा लोलत्तणेण । सव्वं फुडीभविस्सदि । होदु । अब्भन्तरे पदं देसु ।

[ चन्द्रकला तथेति यवनिकामुपसर्पति ]

राजा—[ स्वगतम् ]

यथा यथा प्रान्तमुपैति कान्ता झलज्झलन्नूपुररञ्जिताङ्घ्रिः ।
तथा तथा काचन मोहमुद्रा विवर्द्धते चेतसि किं करोमि ॥
आः सात्विका अपि भावाः समुत्पद्यन्ते ममाङ्गेषु ।

[ विमृश्य ]

सात्विकेषु विकारेषु स्तम्भोऽयं प्रकृतोचितः ।
अन्ये विवर्धमाना मे विकारायैव केवलम् ॥

[ सख्यौ यवनिकामपनयतः ]

चन्द्रकला—[सानन्दं साशङ्कं च विलोक्य स्वगतम्] कथमेसो सो ण भवे । अहवा । अलं संसएण । सो एव्व । अण्णहा उण तस्सिं एव्व अणुरत्ताए मह महाउलप्पसूदाए कहं सिज्जन्दि अङ्गाइं । अहवा भमो । एदं वि आदु

(छा) सखि ! कुन्तलताग्रहसूक्ष्मयवनिकान्तरप्रतिबिम्बितं पश्य चतुरशिल्पिविधिकरकौशलम् ।

(छा) स एव कस्मादिह पुष्पधन्वा भवति ।

(छा) अयि शब्दच्छलेन वञ्चिताऽसि । यथाविधि चन्द्रशिलाभिः रचितेयं प्रतिमा हि रागेण कल्पितशोभारुचिरः विदितः प्रतिभाति सुमधनुरिव पुरः । किमनेन लोलत्वेन । सर्वं स्फुटीभविष्यति । भवतु । अभ्यन्तरे पदं देहि ।

(छा) कथमेष स न भवेत् । अथवा अलं संशयेन । स एव । अन्यथा पुनस्तस्मिन्नेवानुरक्ताया मम महाकुलप्रसूतायाः कथं स्विद्यन्त्यङ्गानि । अथवा भ्रमः । एतदपि उत सर्वत्र सा भावना वा । सर्वथा मम हृदयजीवितस्य चरणावेव मम शरणम् ।

सव्वस्सिं सा भावणा वा । सव्वहा मह हिअअजीविअस्स जणस्स चरणाइं एव्व मह सरणं ।

[ इति निश्चलं विलोकयति ]

राजा—[ स्वगतम् ]

प्रौढकैतकदलच्छविस्फुरद्गण्डमण्डलनिरन्तरोदितैः ।
स्वेदबिन्दुशकलैरियं मयि प्रेम सूचयति भावयत्यपि ॥

सख्यौ—हला किं चिंतेसि । पणामाणंतरं एव्व भावणिज्जा खु देवदाओ ।

चन्द्रकला—तहा । [ इति राज्ञः पदाग्रे कराभ्यां स्पृशन्ती सानन्दं संस्कृतमाश्रित्य ]

लीलयैव कुसुमं धनुः शरान् बिभ्रते भुवनभव्यकीर्त्तये ।
कामरूपकमनीयसम्पदा रञ्जितत्रिजगते नमोऽस्तु ते ॥

[ इति प्रणम्य निर्निमेषं विलोकयति ]

[ साशङ्कम् ]

सहिओ ! कहं पडिमाइं सेदविंदुसमुग्गमसंभावणा णाम ।

राजा—[ स्वगतम् ] आः कथं दृष्टोऽस्मि । कथमिदानीं गोपनीयम् । यदहम्—

कल्पतरुपल्लवादपि सरसेन करेण सरलहृदयायाः ।
स्पृष्टोऽहमिन्दुचुम्बितचन्द्रोपलचातुरीं तिरस्कुर्वे ॥

सख्यौ [ जनान्तिकम् ]—किमुत्तरमिमाइ [ प्रकाशम् ]

होदीए वअणचंदसंदसणेण चंदकंदप्पडिमा सिंजइत्ति किं एत्थ अच्चेरं । किंअ । ण कादव्वं देवदासमक्खं पाअडशंका । ता विण्णप्पं णिवेदिअ णिवत्तेहि ।

चन्द्रकला—सअंविदिअसअलकज्जाए देवदाए वि किं सूअणिज्जं अत्थि ।

सख्यौ—तहवि आआरं करेहि ।

(छा) सखि ! किं चिन्तयसि । प्रणामानन्तरमेव संभावनीयाः खलु देवताः ।

(छा) सख्यौ कथं प्रतिमायां स्वेदबिन्दुसमुद्गमसंभावना नाम ।

(छा) किमुत्तरमस्याः ।

(छा) भवत्या वदनचन्द्रसन्दर्शनेन प्रतिमा स्विद्यतीति किमत्र आश्चर्यम् । किञ्च न कर्त्तव्या देवतासमक्षं प्राकृतशङ्का । तद्विज्ञप्तिं निवेद्य निवर्त्तस्व ।

(छा) स्वयं विदितसकलकार्याया देवताया अपि किं सूचनीयमस्ति ।

(छा) तथाऽपि आचारं कुरु ।

चन्द्रकला [ सगद्गदं सानन्दम् ]—भअवं मंमहरूव सअलजणमहिदे कलुलेणिवइकुले तारिसणामहेएण किदावदारो तुमं एव्व मह मणरहसिद्धिं करेहि

सख्यौ—हला विवरिअ कहेहि कीरिसनामहेएण ।

[ चन्द्रकला लज्जया मुखं नमयति ]

राजा—[ स्वगतम् ]

सर्वनामपदेनैव स्मरयन्त्या ममाह्वयम् ।
चातुर्यस्यास्य मौल्याय न पर्याप्तमिदं जगत् ॥

[ इति विवशो विस्मृत्यात्मानं कराञ्चलात् कतिपयकुसुमानि च्यावयति ]

सख्यौ [ स्वगतम् ]—अहो पमादो पमादो [ सत्वरमुपसृत्य चन्द्रकलायाश्चेलाञ्चलेन तानि धारयन्त्यौ प्रकाशम् ] हला वड्ढेहि दिण्णो एव्व पसादो देवदाए । [ इति प्रसंशतः ]

चन्द्रकला—मुदिदं हि

राजा—[ स्वगतम् ]

प्रक्रान्तार्धविलोकनैकफलको यो यः प्रमादान्मया
प्रक्रान्तो विकृतिक्रमः सरभसं तं तं समर्थ्याखिलम् ।
आशास्यान्यपि लीलया घटयितुं सन्नद्धयोरेनयोः
प्रज्ञाकौशलवैभवं सकृदपि स्तोतुं प्रगल्भेत कः ॥

सख्यौ—हला उट्ठेहि । समाआदो एव्व समओ, भविस्सइ पुणो वल्लहसंदंसणस्स ।

चन्द्रकला—[ किञ्चिन्निर्गत्य पुनर्वलितग्रीवम् ] सहिओ, कहं पद्मिमं विहाय चरणौ न प्रसरतः ।

सख्यौ—हला कहेहि । मअणस्स तस्स रण्णे कोणु भेदो ।

---

(छा) भगवन् ! मन्मथरूप ! सकलजनमहिते कलुलेनृपतिकुले तादृशनामधेयेन कृतावतारस्त्वमेव मम मनोरथसिद्धिं कुरु ।

(छा) सखि विवृत्य कथय । कीदृशनामधेयेन ।

(छा) अहो प्रमादः प्रमादः ।

(छा) सखि । वर्द्धस्व । दत्त एव प्रसादो देवतया ।

(छा) मुदिताऽस्मि ।

(छा) सखि, उत्तिष्ठ । समागत एव समयो भविष्यति पुनर्वल्लभसन्दर्शनस्य ।

(छा) सखि, कथय । मदनस्य तस्य राज्ञः को नु भेदः ।

चन्द्रकला—किंवि ण पेक्खामि ।

सख्यौ—तारिसबंधुसंदंसणं उस्सुआवेहि जणहिअआइं ।

[ चन्द्रकला पुनर्विवृत्य विवृत्य राजानं पश्यन्ती सशङ्केव बहिर्निःसरति ]

सख्यौ—हला इदो तिलअरुक्खवाडिआपहेण गच्छंह ।

राजा—[ कुञ्जगृहाद्बहिर्निर्गत्य प्राचीमवलोक्य ] कथमुदितभूयिष्ठ एव भगवानोषधीरमणः । तथाहि—

प्रौढध्वान्तकरालितां त्रिजगतीमुद्वेलमुद्भासयन्
मुद्राबद्धचकोरचञ्चुपुटयोश्चाञ्चल्यमुल्लासयन् ।
सद्यो विद्रवयन् करैः कुमुदिनीं साकं शशाङ्कोपलैः
पान्थानां विषबिन्दुरेष पुरतो राकेन्दुरुज्जृम्भते ॥

तत् केनोपायेन सन्तापमपाकरोमि । यद्वा । किमन्यत् प्रियवदनेन्दुसन्दर्शनमन्तरेण । तत्रैव परिसरे समयं प्रतिपालयिष्ये । [ इति तथा करोति ]

सख्यौ—हला पेक्ख इमे पहंमि ठिए तिलअरुक्खे ।

चन्द्रकला—इदो वि केत्ति रुक्खा लंघणिज्जा । [ इति प्रतिवृक्षं सञ्चरन्ती विलोकयति ]

राजा—कुवलयदलस्निग्धापाङ्गत्रिभागतरङ्गितं
विकिरति तरौ यस्मिन् यस्मिन्नियं ललनामणिः ।
तरुणकलिकास्तस्मिन् तस्मिन्निरन्तरमुद्गता
दधति सुरभिं भृङ्गश्रेणीपदाहतकेसराः ॥

सख्यौ—हला, कुरवओ एसो । आअरणिज्जमस्स करेहि

[ चन्द्रकला—वल्लभं मनसा प्रणम्य तरुमालिङ्गति ]

राजा—यावद्बाहुमृणालयुग्ममबला मञ्जुक्वणत्कङ्कणं
निस्तार्यन्यपवृत्तहारतिलकं प्रव्यक्तरोमावलिम् ।
रेखालक्ष्यवलित्रयं च तमिमं सत्रासमालिङ्गति
स्कन्धोद्ग्रीवितकोरकः कुरवकस्तावत् समालक्ष्यते ॥

---

(छा) किमपि न पश्यामि ।

(छा) तादृशबन्धुसन्दर्शनं उत्सुकयति जनहृदयानि ।

(छा) सखि, इतस्तिलकवृक्षवाटिकापथेन गच्छामः ।

(छा) सखि, पश्येमान् पथि स्थितांस्तिलकवृक्षान् ।

(छा) इतोऽपि कियद्वृक्षा लङ्घनीयाः ।

(छा) सखि । कुरवक एषः । आचरणीयमस्य कुरु ।

[ सविस्मयम् ] आः किमेतत् ।

कुरवकं रवकभ्रमधुव्रतं स्थपुटितस्फुटकोरकजालकम् ।
पृथुकुचा परिरभ्य निवर्तते सरभसं नटदायतवेणिका ॥

चन्द्रकला—[ सहसा निवृत्य ] हला किं करेमि । कस्स ण विण्णवेम्मि ।

राजा—प्रिये नन्वेष परिसरे तव हृदयानुरञ्जनः परिजनः । आज्ञाप्यतां नाम ।

कुरवकपरिरम्भप्रासविन्यासभेदा-
नयि वपुषि यथावद्भूषणान्यर्पयामि ।
श्रमजलकणमुक्तारञ्जितं मञ्जुवाणि
प्रविचलदलकाग्रं वीजयाम्याननं ते ॥

चन्द्रकला—वल्लह (अ) किदवेदी एसो रुक्खो भमररवेहिं हुंकरेइ किं करेमि ।

राजा—[ ससम्भ्रममुपसृत्य ]

सपदि विजहि शङ्कां निष्कलङ्केन्दुवक्त्रे
निवसति पुरतोऽयं दुष्टशिक्षाधुरीणः ।

[ ऊर्ध्वमवलोक्य ]

वदत मधुपनीचास्त्रासयध्वे किमेनां

[ पक्षा ]

मधु मदविवशानां नानुयोज्या हि चेष्टाः ॥

सख्यौ—[ ससंभ्रमम् ] जेदु महाराओ ।

चन्द्रकला—[ सस्मितापाङ्गं मनसा प्रणम्य स्वगतम् ] कहं चिंदिदमेत्तो एव्व आवण्णकिपालु सविहगदो जणो । [ साशङ्कम् ] कहं पडिमादंसणं एव्व पच्चाअदं विअ मे होदि ।

सख्यौ—हला, किं मुहा होसि । आअंकहरस्स जणस्स हिअआवेअं कहेहि । अहवा किं कदिदव्वं । कुरवअदंसणजणिदणिव्वेदादो एव्व कहिदो हिअआवेओ । [ राजानं प्रति संस्कृतमाश्रित्य ]

---

(छा) सखि किं करोमि । कस्यैतद्विज्ञापयामि ।

(छा) वल्लभ अकृतवेद्येष वृक्षो भ्रमररवैर्हुंकरोति किं करोमि ।

(छा) जयतु महाराजः ।

(छा) कथं चिन्तितमात्र एव आपन्नकृपालुः सविधगतो जनः । कथं प्रतिमादर्शनमेव प्रत्यागतमिव मे भाति ।

(छा) सखि, किं मुधा भवसि । आतङ्कहरस्य जनस्य हृदयावेगं कथय । अथवा किं क[illegible] । [illegible]दर्शनजनितनिर्वेदादेव कथितो हृदयावेगः ।

त्वयीयमुदितस्नेहा सततं परिदूयते ।
प्रकृतिस्तु तवार्तानां श्रेयोवितरणव्रतम् ॥

राजा—सर्वसङ्ग्रहः खल्वियमभ्यर्थना ।

[ नेपथ्ये सविषादम् ]

सखे किं करोमि । [ संस्कृतमाश्रित्य ]

जम्बूफलानां भरमुत्तमाङ्गे कृत्वा च हस्ते परमार्थचापम् ।
इहागतं मां कपयः समन्तात् भ्रमद्भुवः क्रूरमनुद्रु(द्र?)वन्ति ॥

तत्परित्रायस्व माम् ।

राजा—[सवितर्कं स्वगतम्] अयमस्मदीयो भक्षणचपलः स भवेत् । किञ्च । अनेन चापलवृत्तान्तेन स्मरामि । मृगयाविश्लिष्टो वीरसेनो नामैतावन्तमनेहसं नगरपरिसरे मृगयतेति ।

सख्यौ—जुत्तं खु दीणदयालुत्तणं तुम्हारिसाणं ।

[ राजा निष्क्रान्तः ]

चन्द्रकला—सहि किं एदं । णिसाइं वाणराणं अविणअप्पसंगोत्ति ।

सख्यौ—सहि किं ण पेक्खसि । रअणपआसिअदिसासु दिव्यभूमिसु इमासु णिसावि दिअएहि । होदु । संभमाअदं अह्म कंचुइणं पेक्खंम ।

[ प्रविश्य सत्वरं ]

कञ्चुकी—भट्टिन्याज्ञापयति त्वरितमाकारय भर्तृदारिकामिति ।

चन्द्रकला—अवि मग्गे कोवि विणोदो दिट्ठो ।

कञ्चुकी—दृष्ट एव समीपे कोऽपि वानराकारः पुरुषः कपिभिः परितर्जितः क्रोशति ।

सख्यौ—कहं विअ ।

कञ्चुकी—

पाणौ वहन्तं परमार्थचापं मामप्यहो भीषयतः प्रकामम् ।
तदद्य वः क्रूरतराः कपीन्द्राः छेत्स्यामि वालानतिदीर्घलोलान् ॥

---

(छा) युक्तं खलु दीनदयालुत्वं युष्मादृशानाम् ।

(छा) सखि किमिदम् । निशायां वानराणां अविनयप्रसङ्ग इति ।

(छा) सखि किं न पश्यसि । रत्नप्रकाशितदिशासु दिव्यभूमिषु आसु निशाऽपि दिवसायते । भवतु संभ्रमागतमस्मत्कञ्चुकिनं प्रेक्ष्यामः ।

(छा) अपि मार्गे कोऽपि विनोदो दृष्टः ।

(छा) कथमिव ।

एत त्संभ्रमोदितं तोटकमङ्गम्।

ससंभ्रमं तु वचनं तोटकं परिकीर्त्यते।

चन्द्रकला—अयि परमत्थचाओत्ति किं एदं।

सख्यौ—[ जनान्तिकम् ] इदो वरं रहस्सं विसदेमो। [ प्रकाशम् ] सहि चंदअले जो पडिमरूवेण कुसुमचावो दिट्ठो पस्सिदोअ तुए सो एव्व दे वल्लहो। तस्स अंतरंगो चापहारिपुरुसो एसो।

चन्द्रकला—कुदो एव्वं संविहिदं।

मञ्जरी—देविणिउत्तदोहलंमि तुह अणादरो माहोदुत्ति।

चन्द्रकला—कहं अलीअवादिणीओ ण अंहेत्ति कहिदं।

सख्यौ—अइ भमिआसि। अप्पिअवादिणीओ ण अंहेत्ति खु कहिदं अवि ण सुमरेसि सव्वं फुडीभविस्सदित्ति कहिदं।

चन्द्रकला—सिद्धकप्पो मे मणोरहो [ कञ्चुकिनं प्रति ] भट्टिणी किं करेदि।

कञ्चुकी—सा सायमागत्य चन्द्रशालायां शिखरपञ्जरामलम्बितशुकमुखोदितं "दिट्ठिआ ण कोवि एद्ध जणो। जस्स मुहेण रहस्सं विहलिदं भवे। अयि लीलाए एव्व रहस्सचोरअं पेक्खाहरं णाम सुअं वज्जिअ ण कोवि। अदोखु णं सव्वहा हत्थे करेहित्ति भट्टिदारिआ तुह वि अब्भन्तरपवेसणं सा तवस्सिणी णाणुमण्णेइ। तइ भट्टिणी चंदसालावलंविदे पंजरे णं करिस्सं" इति वचनमाकर्ण्य सशङ्का परिजनेन किमपि पर्यालोचयन्ती वर्तते।

चन्द्रकला—अवि एदं कहं भवे।

---

(छा) अयि परमार्थचापेति किमेतत्।

(छा) इतःपरं रहस्यं विशदयावः ( मः )।

(छा) सखि चन्द्रकले यः प्रतिमारूपेण कुसुमचापो दृष्टः स्पृष्टश्च त्वया स एव ते वल्लभः। तस्यान्तरङ्गश्चापधारी पुरुष एषः।

(छा) कुत एवं संविहितम्।

(छा) देवीनियुक्तदोहले तवानादरो मा भवत्विति।

(छा) कथमलीकवादिन्यौ नावामिति कथितम्।

(छा) अयि भ्रान्तासि। अप्रियवादिन्यौ नावामिति खलु कथितम्। अपि नु स्मरसि सर्वं स्फुटी भविष्यतीति कथितम्।

(छा) सिद्धकल्पो मे मनोरःथ। भट्टिनी किं करोति।

(छा) अप्येतत्कथं भवेत्।

अनेन स्वाभिलषितवल्लभप्राप्तीच्छारूपकार्यस्यापायशङ्कासूचनात् प्राप्त्याशा नामार्थावस्था सूचिता ।

उपायापायशङ्काभ्यां प्राप्त्याशा कार्यसम्भवः ।

सख्यौ—[ संस्कृतमाश्रित्य ] कृतं चिन्तया ।

युवयोः सखि दैवसम्भृतः प्रणयोऽयं वद कस्य न प्रियः ।

चन्द्रकला—तह वि संकणिज्जो गुरूजणो ।

सख्यौ—[ पुनरपि तदेवाश्रित्य ]

जननीजनकौ न किं भवेतां प्रियपुत्रीहृदयानुवर्तने ॥

अत्र दैवसम्भृतः प्रणय इत्यनेन नायिकाप्राप्तिसूचककुलदेवतास्वप्नरूपप्रसादवस्तुनः मुखसन्धिः गूढोक्षिप्तस्य पुनरुपक्षेपादाक्षेपो नामाङ्गम् ।

गूढवस्तुसमं क्षेपमाक्षेपं विबुधा जगुः ।

तदेवं प्राप्त्याशापताकयोः सन्धिः साङ्गो मुखसन्धिः । होदु । णवसमुग्गअं कुरवअमंजरीमेणं घरअट्ठिअसोहग्गगोरीचरणेसु समप्पेमो ।

चन्द्रकला—जं वो रुच्चइ ।

[ इति निष्क्रान्ताः सर्वे ]

इति श्रीपरमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादितनिस्सहायदैनन्दिनप्रबन्धनिर्माणसाहसिकनिखिलविद्वज्जनलालनीयसरससाहितीसम्प्रदायप्रवर्तकनरसिंहकविरचिते नञ्जराजयशोभूषणे अलंकारशास्त्रे नाटकप्रकरणे चन्द्रकलाकल्याणे

तृतीयोऽङ्कः ॥

---

## अथेदानीमङ्कास्यम् ।

[ ततः प्रविशति वीरसेनः ]

ह्यः किल आमध्याह्नमनुपदमेव मयाऽनुसृतो मृगयामटन् कश्चन गिरिकन्दरादेणशावकमनुद्रवन्तं कमपि नखरायुधहतकं ससंभ्रममनुधावन् महासत्त्वः पादचारी महाराजः ।

---

(छा) तथाऽपि शङ्कनीयो गुरुजनः ।

(छा) भवतु । नवसमुद्गकां कुरवकमञ्जरीमेतां गृहस्थितसौभाग्यगौरीचरणयोः समर्पयामः ।

(छा) यथा वो रोचते ।

अत्र गर्भसन्धिप्रसिद्धस्य मृगयारूपवस्तुनो विच्छिन्नस्य विशेषणजनित-व्यसनमुखेन विमर्शाद्विमर्शसन्धिरयम् ।

गर्भसन्धिप्रसिद्धस्य वस्तुनः परिमर्शनम् ।
क्रोधेन व्यसनाद्वाऽपि विमर्शः सन्धिरिष्यते ॥

अत्र नखरायुधहतक इत्यनेन स्वस्य प्रभुविश्लेषहेतौ नखरायुधे दोषप्रख्या-पनादपवादो नामाङ्गम् ।

तत्रापवादो दोषाणां प्रख्यापनमुदीर्यते ।

अथ तमेवानुसरन् रे रे दुष्टश्वापद दुर्बलहिंसापर भवान् न भवतीति देवस्य मौर्वीनिनादेन सह परुषभाषितमाकर्ण्य यावदुपसर्पामि तावदेव सारङ्ग-वैरिणं तमपि निपातयन् अन्यत्रापसृतः स न लक्षितश्च ।

अत्र भवान्न भवतीत्यनेन रोषसूचनात् संफेटो नामाङ्गम् ।

रोषेण कथितं वाक्यं संफेटं संप्रचक्षते ।

तदनन्तरं च ।

जन्तूनुद्वृत्तवृत्तीन् दलयितुमनुगानादिशन् लुब्धवर्गान्
आबद्धान् वागुराभिर्हरिणशिशुगणानानयन् रक्षणाय ।
अन्विष्यान्विष्य कामं वनभुवमभितो देवमासायमेव
प्रासस्तस्मान्निवृत्तो नगरमिममहो सम्प्रवृत्ते निशीथे ॥

अत्रोद्वृत्तजन्तुषु हरिणेषु च क्रमेण वधबन्धादिकथनाद्विद्रवो नामाङ्गम् ।

विरोधवधबन्धादिर्विद्रवः परिकीर्त्तितः ।

श्रुतश्च महाराजोऽपि यामावशिष्टायामेव यामिन्यामागत्य परिश्रान्तो गृहाभ्यन्तरमधिशेत इति ।

[ कर्णं दत्वा ] कोऽयं नगरप्रतिहारे कलकल इव । आः स्मृतम् । प्रेषितः किल स्वामिना विभुना मम कनीयान् भ्राता विजयसेन[ः]ससेनः तस्य दुर्गा-क्रमणाय कबकवर्मणः केरलभूमिपस्य । यः किल—

मूढोऽसि नञ्जक्षितिवल्लभेन तेनाऽपि ते हन्त कथं विरोधः ।
इति प्रवक्तॄनपि वंशवृद्धान् विडम्बयामास सहस्ततालम् ॥

अत्र वंशवृद्धान् विडम्बयामासेत्यनेन गुरुतिरस्काराद्द्रवोनामाङ्गं सूच्यते।

गुरुव्यतिक्रमं प्राह द्रवं तु भरतो मुनिः ।

तदिदानीं स परिवृतमत्तमातङ्गघण्टावलयमुखरितदिगन्तं तं हस्ते परिगृह्य प्रतिहारभूमिमभिवर्त्तते ।

अत एव—

अन्तर्मन्दं विशत नगरं केन कोलाहलो वः
सम्मर्दं किं सहन्ते करतलकलिता वेत्रदण्डा इमे नः ।
रे रे वध्योऽसि दूरे निवस बहिरितस्त्वं विशङ्कं व्रजेति
श्रूयन्ते धीरनादाः सरभसमधुना गोपुरे रक्षकाणाम् ॥

अत्र वेत्रदण्डा न सहन्त इत्यनेन तर्जनसूचनात् द्युतिर्नामाङ्गम् ।

द्युतिर्नाम समादिष्टा तर्जनोद्वेजनात्मिका ।

अनेन विजयवृत्तान्तेन स्मरामि कमपि प्राक्तनं जयवृत्तान्तम् । यत्किल बाल्य एव—

खण्डं खण्डं रुण्डखण्डानरीणां
रक्ताम्भोभिः पूरयित्वा धरित्रीम् ।
शूरैर्दत्तं वीरसेनेति नाम
प्राप्तोऽभूवं दिक्तटस्यूतकीर्त्तिः ॥

अनेन स्वसामर्थ्यकथनद्व्यवसायो नामाङ्गम् ।

व्यवसायः स्वसामर्थ्यप्रख्यापनमुदीर्यते ।

आः कथमयमन्तःप्रविष्टानि सैन्यानि तत्र तत्र निश्चलं नियमयन् कनकवर्मद्वितीयो राजगृहमुपसर्पति । यावदेनमतिचिरदृष्टमनुजन्मानं सम्भावयामि । [ इति निष्क्रान्तः ]

[ ततः प्रविशति यथानिर्दिष्टो विजयसेनः ]

विजयसेनः—

कृपातिभूम्ना कलुलेन्दृपालसन्तानवृक्षस्तवकेन राज्ञा ।
नञ्क्षितीन्द्रेण पुरा नियुक्तं कार्यं समादाय समागतोऽहम् ॥

तदिदानीमचिरेणैव देवस्य विजयश्रियमार्जितामपूर्वां पादमूले समर्पयामि । कः कोत्र भोः ? । निवेदयत मां विभुभ्यः ।

[ प्रविश्य सत्त्वरं कञ्चुकी पुरुषौ च ]

कञ्चुकी—अये विजयसेन पुरुषयोरधीनः क्रियतां कारागृहनिवसाय कनकवर्मेति देवः समादिशति । अनेन कनकवर्मणि अवमानसूचनाच्छलनं नामाङ्गम् ।

अवमानादिकरणं कार्यार्थं छलनं विदुः । इति ।

विजयसेनः—अये कुमुदबन्धुरनुदित एव । केन प्रबोधितो देवः ।

कञ्चुकी—

चन्द्रोदयोद्वेलपयोधिवीचिरिङ्छोलिकाजृम्भितसोदरेण ।
कोलाहलेनैव वरूथिनीनां प्रभुः प्रबुद्धोऽजनिसम्भ्रमेण ॥

विजयसेनः—भवतु कः समयः ।

कञ्चुकी—अधिमज्जनगेहम्—

विरचितधेनुसपर्यः कृतमञ्जुलमज्जनो महीरमणः ।
अगरूपरिमलसारैरलकानधिवासयन् वसति ।

विजयसेनः—तर्हि बहिरलिन्द एव समयं प्रतिपालयेयम् । [ इति तथा करोति ]

कञ्चुकी—पुरुषौ, प्रगृह्यतामयं कनकवर्मा अहमप्युदन्तमपि देवाय निवेदयामि । [ इति निष्क्रान्तः ]

पुरुषौ—[तं परिवेष्ट्य] अरे राअ इदो काराघरअमग्गो । [इति दर्शयतः]

कनकवर्मा—[ सविषादं स्वगतम् ] लज्जितोऽस्मिराजसम्बोधनात् ।

पित्रा शूरेणार्जितां राज्यलक्ष्मीं
बिभ्रन् मौग्ध्यादासवर्गैर्विरुद्ध्यन् ।
यस्यालम्बादीदृशश्रीरभूवं
श्लाघ्यः सोऽयं राजभावो ममैव ॥

अत्र पित्रा शूरेणेत्यनेन गुरुकीर्त्तनात् प्रसङ्गः ।

गुरूणां कीर्तनं यत्तु स प्रसङ्ग इतीरितः ।

पुरुषयोरेकः—

अरे राअ घरणीए अपरिइअपदविण्णासो विअ कुडिलं कुडिलं चरेसि । तुरियमायच्छेहि । अण्णहा उण कोपो भवे अम्हाणं ।

अनेन कारागृहप्रवेशानुकूलस्वनैर्घृण्यरूपगुणस्याविष्करणाद्विचलनं नामाङ्गम् ।

आविष्कारो विचलनं प्रकृते स्वगुणस्य तु ।

---

( छा ) अरे राजन्, इतः कारागृहमार्गः ।

( छा ) अरे राजन्, धरण्यामपरिचितपदविन्यास इव कुटिलं कुटिलं चरसि । त्वरितमागच्छ । अन्यथा पुनः कोपो भवत्यावयोः ।

अन्यः—अळं णिक्करुणत्तणेण। धरणीए अपरिअपद्विण्णासो एव्व। पेक्ख से महाभाअत्तणं संखचक्ककलसकुलिसजलअद्धजप्पमुहमहाभाअरेखा-चिण्णाइं सूअअंदि चलणाइं एव्व।

अन्यः—अये तुम एव्व करुणामिऊ। अहं उण ईरिसपापकारी [ इति पुरुषं कुटिलं पश्यति ।

इतरः—[ सकोपम् ] अरे, महाराअकटक्खस्स तुमं विअ अहं वि भाअणं एव्व। ता कुदो ते गव्वो। [ इति पुरुषं प्रति कुप्यति ]

अनेन ससंरम्भान्योन्यवचनेन विरोधनं सूच्यते।

अन्योन्यरूपसन्बन्धाद्वचनं स्याद्विरोधनम् ।

अन्यः—[ विहस्य ] मा कुप्प मा कुप्प। णिक्करुणत्तणं अळंकारो कज्जणिजुत्ताणं राअपरिअणाणं। [ कनकवर्माणं प्रति ] इदो कारघरअं पवेसेहि। [ कनकवर्मा तथेति निष्क्रान्तः ]

पुरुषौ—अम्हे वि णं वुत्तंतं चंदसालागदस्स रण्णो णिवेदइस्सम्ह। [ इति निष्क्रान्तौ ]

[ ततः प्रविशति चन्द्रशालाधिगतो राजा ]

राजा—[ सानुस्मरणम् ]

तामेव विस्तृ( स्मृ? )तनिमेषविलोलभावं
किञ्चित्कपोलतलविम्बितमन्दहासम् ।
भूयो विवृत्तवदनं च विलोकमाना-
मद्यापि हन्त हृदयं तनुते पुरस्तात् ॥

आः किं करोमि।

कर्पूरद्रववैखरीं श्रवणयोर्वाण्या मरन्दस्रुतिं
बाह्वोर्बालमृणालदाम च किमप्यानन्दधारां हृदि।

---

( छा ) अलं निष्करुणत्वेन, धरण्यामपरिचितपदविन्यास एव, पश्यास्य महाभागत्वम्, शङ्ख चक्रकुलिश जलज ध्वजप्रमुख महाभागेरेखा चिह्ने सूचयतश्चरणे एव।

( छा ) अये त्वमेव करुणामृदुः। अहं पुनरीदृशपापकारी।

( छा ) अरे महाराजकटाक्षस्य त्वमिव अहमपि भाजनपात्रः। तत् कुतस्ते गर्वः।

( छा ) मा कुप्य मा कुप्य। निष्करुणत्वं खलु अलङ्कारः कार्यनियुक्तानां राजपरिजनानाम्।

( छा ) इतः कारागृहं प्रविश।

( छा ) आवामप्येतद्वृत्तान्तं चन्द्रशालागताय राज्ञे निवेदयावः।

तामङ्के नवचन्द्रिकां नयनयोः प्रायः सुधासारिणीं
धातुर्नूतनसृष्टिमश्रुतचरीमालोकयिष्ये कदा ॥
अहो दशाविपर्ययो ममेदानीम् ।
लीलोद्यानं बन्धनागारमिन्दुः
साक्षाद्विन्दुः कालकूटानलस्य ।
वज्राघाता मारुता धूतचूताः

किंबहुना—

सर्वं क्रूरं मत्प्रियां तां विनैव ॥

तत्केनेदानीं समयं यापयामि

मृगयां चरामि नहि वीरसेनतो
दिनयुग्ममेव ननु याचिता हि सा ।
अधुनाऽपि सैव यदि मत्कृता स्वयं
नगरं समग्रमपि शङ्कितं भवेत् ॥

[ प्रविश्य कञ्चुकी ]

देवपाददर्शनाय पुरुषेण सह बहिरलिन्दमध्यास्ते कुशलमतिरमात्यः ।

[ राजा नयनाञ्चलैरनुमनुते । कञ्चुकी निष्क्रान्तः । प्रविश्य पुरुषेण कुशलमतिः ]

अहो यथाविधिनियुक्तचतुरुपायमहिताया वदान्यता नीतिकल्पलतायाः ।

यत्प्रेषितं केरलभूमिपालं
जेतुं मया किञ्चन दण्डचक्रम् ।
श्रुत्वा तदन्ये पुनरन्तसीमा—
पार्श्वस्थिताः सन्धिमिहार्थयन्ते ॥

अत एव हि—

नागाः शतं केनचिदुत्तमाश्वाः
सहस्रमन्येन तथा शताङ्गाः ।
भीतेन केनाप्ययुतंविभोर्नः
सम्प्रेषिताः स्वस्वहितेच्छयैव ॥

भवतु वेद्यं विभवे निवेदयामि ।

[ राजानमुपसृत्य ] विजयतां देवः ।

पुरुषः—( भुवं ललाटं हृदयं च स्पृशन् त्रिःप्रणमति )

राजा—[ तमपाङ्गेन विलोकयन्नमात्यं प्रति ] अपि प्रजाः प्रमोदन्ते ।

अमात्यः—

एतै( पुत्रै ? )र्गोभिः पूरितागारगोष्ठा
भुञ्जानाश्च स्वर्गभोगानिहैव ।
त(त्व ? )त्सौभाग्यान्यालिखन्तः पठन्तो
मर्त्या नन्दन्त्युत्सवैरेव नित्यैः ॥

राजा—प्रस्तूयतां प्रकृतम् ।

अमात्यः—[ पुरुषं प्रति ] स्वनियोगं कथयित्वा निर्गम्यताम् ।

पुरुषः—[ तथेति ] दिनचर्याधिकारः कलाधरो विज्ञापयति । श्वेताचलदुर्गस्थेनाधिकारिणा मृगयामटता कश्चन निधिर्लब्धः । किञ्च । कुन्तलदेशाधिपरत्नाकरस्य बन्धुजनः स्वर्णाम्बिकासेवागतस्ततः प्रातर्निवृत्तश्च । किञ्च । कावेरीसिन्धुसङ्गमे किञ्चिन्नवरत्नपूर्णं चण्डमारुतवेगनुन्नं द्वीपान्तरादागतं किमपि यानपात्रम् ।

[ इति वाचयित्वा प्रणम्य निष्क्रान्तः ]

राजा—[ ससम्भ्रमं स्वगतम् ]

अपि स्वदेशं सरसीरुहाक्षी
कथं प्रयाता प्रकटानुरागा ।
विहाय मामङ्गजतापतप्तं
यद्वा स्वतन्त्रा गुरुभिर्न कन्याः ॥

अमात्यः—देव, कुन्तलदेशाधिपतिना रत्नाकरेण किमपि कल्याणपत्रमभिप्रेषितम् ।

राजा—[ स्वगतम् ]

पत्रं तदेतत्तरलेक्षणायाः
पाणिग्रहं कस्य वदेदिदानीम् ।
यद्वा विशङ्काभिरलं ममैव
यतः प्रसीदत्यधिकं मनो मे ॥

अत्र ममैवेत्यनेन भाविनः श्रेयसः स्वकीयत्वेन सिद्धवत्कथनात् प्ररोचना ।

सिद्धवद्भाविनो यस्य सूचना स्यात् प्ररोचना ।

[ प्रकाशम् ] भवतु वाच्यतां तावत्।

[ अमात्यः पत्रं वाचयति ]

लक्ष्मीः स्वैरं यस्य गेहे प्रसन्ना
शक्तिः शम्भोर्यस्य चाजन्मसिद्धा।
शौर्यौदार्यख्यातिलावण्यधैर्यै-
र्विश्वोल्लासो राजते नञ्जभूपः॥

तस्याद्य निःसमलसद्गुणगणविस्मापितत्रिलोकस्य।
रत्नाकरेण राज्ञा प्रहिता शुभपत्रिका भवतः॥

कथनीयं तु—

स्वर्णाम्बिकास्वप्ननियोगभूम्ना स्वयंवरं सम्प्रति कन्यकायाः।
प्रस्तावयन् सर्वदिगन्तरेभ्यो विभून् समाकारितवान् क्षितीन्द्रान्॥

तदिदानीं भवताऽपि मदभिलषितं सफलीकरणीयमिति।

राजा—[ सविस्मयं स्वगतम् ]

क्व कुन्तलाः क्वैष ककुन्मद्दीभृत् क्वाहं क्व कन्या क्व नु वाऽऽवयोश्च।
स्नेहप्रकारः क्व च वाऽम्बिकायाः स्वप्ने नियोगो नियतिर्विचित्रा॥

अनेन वृत्तान्तानां कार्याणां सङ्ग्रहसूचनादादानं नामाङ्गम्।

कार्याणां सङ्ग्रहो यत्र तदादानं प्रचक्षते।

[ प्रकाशम् ] भवतु। आगम्यत इति विलिख्यताम्।

अमात्यः—तथा [ इति निष्क्रान्तः ]

राजा—कः कोऽत्र भोः।

[ प्रविश्य कञ्चुकी ]

देव, कारागृहप्रवेशितकनकवर्मा विजयसेनो बहिरास्ते।

राजा—विलम्बः क इव।

कञ्चुकी—[ निष्क्रम्य तेन सह प्रविश्य ] देव, विजयसेनः प्रणमति।

राजा—अरे, विमृश्यतां कियन्तः काण्यां ( रायां ? ) निवसन्तीति।

विजयसेनः—[ तथेति निष्क्रम्य। पुनः प्रविश्य ]

अङ्गो वङ्गो मालवः कोङ्कणेन्द्रो गौडो म्लेच्छो घूर्जरः केरलश्च।
अष्टावेते वासमातन्वतेऽस्मिन् भूमीपाला बन्धनागारमध्ये॥

राजा—शुभप्रशस्तिमिमामभिप्रकाश्य यथाविधि सम्भाव्य बन्धनतस्ते विमुच्यन्ताम्।

अनेन तेषु विरोधशमनाच्छक्तिर्नामाङ्गम् ।

विरोधशमनंयत्तुशक्तिमाहुर्मनीषिणः ।

[ विजयसेनस्तथेति निष्क्रान्तः ]

राजा—[ चन्द्रशालागवाक्षेण दृशमर्पयन् ] अये कुमुदगन्ध, कोऽयं कलकलः ।

कञ्चुकी—देव, अद्य भृगुवासर इति भगवतीं चूडेश्वरचिरन्तनसुकृत-परिपाकं मरकताम्बां सेवितुं पौराणामसौ कलकलः ।

राजा—अहो, अनेकसुकृतलभ्यं हि भृगुवासरे भवानीसेवनं नाम। तद्वयमपि विश्वमातरं प्रणम्यागमिष्यामः । तन्निर्दिश्यतां सरणिः ।

कञ्चुकी—[ तथेति ] इत इतश्चम्पकगिरिः ।

राजा—[ तदधिरोहणमभिनीय देवालयगर्भप्रवेशं नाटयन् ईश्वरं प्रति कृताञ्जलिः ]

जय जय चन्द्रवतंस प्रणतजनत्राणचण दयाजलधे।

जय निगमतुर (तरु ?) ग चम्पकगिरिचूडाकर जय गुणाधार ॥

[ इति प्रणम्य, अम्बां प्रति कृताञ्जलिः ]

जय जय जगदम्ब बिम्बारुणच्छायदेहप्रभागुम्भमज्जत्रिलोके विलोकेन कन्दर्पसञ्जीवने, यौवनेनान्वहं नूतनेनेन्द्रमातङ्गकुम्भस्थलोज्जृम्भिवक्षोजनिर्भिण्णवेणीलताबन्धरत्नस्फुरत्कञ्चुकीबन्धनेनानिशं भूषिते, निगमशिखर-कल्पवल्लीप्रवालप्रमादायिपादाम्बुजन्यासनिष्यन्दिलाक्षारसासारमुद्राप्रणामात्त-संरम्भजंभारिमुख्यामरश्रेणिनीरन्ध्रितप्रान्तकल्पावलीवेल्लितक्षीरवाराशिमध्यो-ल्लसन्नीपमूलस्थिते, कलसविश्वस्थिते, द्वियुगदलसरोरुहान्तःसमुद्यत्प्रभानाथ-रूपानुकारे, पुरारेर्वपुःसव्यसीमाविहारे, करारात्तकीरे, मुरारेरपि स्वान्तसम्भाविते, देवि ते पादपङ्केरुहं देहि मे मानसेवाऽनभिज्ञस्य वत्सस्य वात्सल्यसाराकृते, सकलनिगमसारभूते, भवानि त्वमेवासि, शम्भुस्त्वमेवासि, शौरिस्त्वमेवासि, धाता त्वमेवासि, माता च विश्वस्य, तत्त्वां विना ध्येयमन्यं न मन्ये, किमन्येन मे प्रार्थनेनाम्ब हेरम्बषड्वक्त्रयोर्या दया सा मयि स्थीयतां देवि तुभ्यं नमः [ इति प्रणाममभिनीय गिरेरवतरणं नाटयन् ]

अये कुमुदगन्ध—

प्रणतत्राणदीक्षाया मम मातुः प्रसादतः ।

मनोरथस्तु निर्विघ्नो भविष्यति न संशयः ॥

अनेन कार्यनिश्चयकथनान्नियताप्तिर्नामार्थस्थितिः ।

अपायाभावतः कार्यनिश्चयो नियताप्तिका ।

तद्भवतु । मत्प्रियया संविभक्तशुभसन्तोषो भवेयम् । तन्निर्दिश्यतां सरणिः।

कञ्चुकी—इत इतः ।

अत्र कनकवर्मकथाप्रकृताव्यापित्वात् प्रकरी नामार्थस्थितिः ।

प्रकरीं प्रकृतावा(व्या?)प्तां कथामाहुर्मनीषिणः ।

तदेवं नियताप्तिप्रकर्यौः सन्धिः साङ्गो मुखसन्धिः ।

[ इति निष्क्रान्ताः सर्वे ]

इति चन्द्राकलाकल्याणे चतुर्थोऽङ्कः ।

अथेदानीं निर्वहसन्धिः । तत्रादौ खण्डचूलिकां प्रस्तौति ।

[ नेपथ्ये ]

[ आकाशयानेन गन्धर्वयोगिनी ]

अहं किल पूर्वेद्युः सायममृतांशुमौलिमभिवन्दितुमखिलसुरवन्दितचरणारविन्दमहाराजमहेन्द्रप्रियसखस्य स्वामिनो गन्धर्वचक्रवर्त्तिनो विश्वावसोः प्रियकलत्रस्य किन्नरकण्ठ्याः सङ्गीतसतीर्थ्या स्वरमञ्जरी तदनुमता कुबेरशैलं गता । निवृत्ता च पुनरिदानीं तद्भट्टिनीमुपसरामि । ( दिशो विलोक्य ) किमिदानीम् ।

निष्पन्दविस्तृतपतत्रकमन्तरन्त-
र्भुग्नाङ्गुलि प्रचलितैर्नवराजहंसैः ।
आयोजितैर्मणिविमानगणैरिदानीं
कस्मान्महीमवतरन्ति सुपर्वकन्याः ॥

भवतु । अभ्यर्णमागतां विमानचारिणीं पृच्छामि । ( किञ्चिद्गत्वा ) आः साक्षादित एवाभिवर्तते भगवत्यरुन्धती ।

( ततः प्रविशति यथोक्ताऽरुन्धती )

नेपथ्य एव

दमस्वसुर्यः प्रथमं प्रवृत्तः स्वयंवरो यस्त्वथ याज्ञसेन्याः ।
ततोऽपि नेत्रप्रियकृन्ममासीन्महोत्सवो हन्त चिराय दृष्टः ॥

तदिदानीमेतावतः समयस्य भगवान्वसिष्ठः पुनरभ्यागतातिथ्यकरणाय मामेव प्रतिपालयति । तत्सत्वरं गमिष्यामि । ( इति परिक्रामति )

( गन्धर्वयोगिनी उपसृत्य ) अम्ब,

तेजोभिस्तटितां पुञ्जं रुन्धतीमप्यरुन्धतीम् ।
सरस्वतीस्नुषामेषा सेवते स्वरमञ्जरी ॥

[ इति प्रणमति ]

अरुन्धती—अयि गन्धर्वयोगिनि—

योऽसाववाङ्मुखहृदम्बुजकोशकोटि-
सूक्ष्माध्वभागवलदग्निशिखान्तरस्थः ।
ज्योतिर्मयो गुरुरनन्तगुणः परात्मा
श्रेयः स ते वितनुतां धुरि भासतां च ॥

गन्धर्वयोगिनी—आर्ये, कुत आगम्यते ।

अरुन्धती—आहूताऽस्मि किल प्रातरहममरराजपुरन्ध्या शचीदेव्या-आर्ये महीतले कुन्तलराजेन प्रक्रम्यमाणं स्वकन्यास्वयंवरणमहोत्सवं भवत्या सह विलोकितुमिच्छामीति, दृष्टोत्सवा च पुनर्निवृत्ता ।

गन्धर्वयोगिनी—(स्वगतम्) ज्ञातं तदर्थमेवावतीर्णानि महीतले दिव्य-विमानानि । (प्रकाशम्) आर्ये किं वृत्तं तत्र ।

अरुन्धती—अयि बहुवक्तव्यतया समयोऽतिवर्तते । श्रूयतां सङ्ग्रहेण ।

गन्धर्वयोगिनी—अवहिताऽस्मि ।

अरुन्धती—

नानादेशनृपालकास्त्रिभुवनप्रख्यातदोर्विक्रमा
गेहे कुन्तलभूपतेः समुदिता लावण्यपुञ्जा इव ।
येषामाभरणश्रियैव गगने मेघप्रसक्तिं विना
दिक्चक्रे तटितो नवामृतमयी वृष्टिश्च संजज्ञिरे ॥

गन्धर्वयोगिनी—ततस्ततः ।

अरुन्धती—

अम्बां विभाव्य कुलदैवतमिष्टसिद्ध्यै
नत्वा शचीं तदनु कुन्तलराजकन्या ।
तेषां ततिष्वपि गता दयितं वरीतुं
माकन्दपङ्क्तिषु यथा मधुमासलक्ष्मीः ॥

किञ्च—ज्योत्स्नेव कैरववनेषु सरोजराजि-
ष्वामत्तहंसतरुणीव घनव्रजेषु ।
विद्युल्लतेव नृपपङ्क्तिषु सा चरन्ती
चान्द्री कलेव भुवि चन्द्रकला व्यलासीत् ॥

अनेन चन्द्रकलाप्राप्तिरूपकार्यानुगुण्येनानुभूतस्य स्वयंवररूपवस्तुनः प्रख्यापनान्निर्णयो नाम निर्वहणसन्धेरङ्गम् ।

निर्णयः स्वानुभूतार्थप्रख्यापनमुदीर्यते ।

गन्धर्वयोगिनी—अथ किं वृत्तम् ।

अरुन्धती–किमन्यत ।

'यस्मिन् भवेयुरमराब्जदृशां वचोभिः
श्लाघाः शतं सुमनसोऽपि करैर्विकीर्णाः ।
येनैव सर्वजगतां नयनोत्सवोऽभूत्
तादृक् स्वयंवरणकौतुकमाविरासीत् ॥

गन्धर्वयोगिनी—कस्य पुनर्महाभागजन्मनः समुदश्चितं भागधेयेन ।

अनेन स्वयंवररूपकार्यस्य प्रकृतानुगुण्येनान्वेषणाद्विरोधो नामाङ्गम् ।

कार्यस्यान्वेषणं यत्स्याद्विरोधः स उदाहृतः ।

अरुन्धती—तस्य नाम–

यस्मै प्रसीदति निरन्तरमिन्दुमौलिः
ज्योतिर्मयः प्रथममेव पतिंवरायाः ।
यस्यापि सस्मितविलोकनपाणिपद्म-
स्पर्शादिभिः स्वयमभूदनुरागयोगः ।

अनेन मुखसन्ध्यादिसन्धिचतुष्टयकथितानां कुलदेवतारूपज्योतिर्मयदेवस्वप्नप्रसादकन्यकाविलोकनस्पर्शनाद्यर्थानां सूचनान्निर्वहणसन्धिः ।

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथातथम् ।
एकार्थ्यमुपनीयन्ते यत्र निर्वहणं मतम् ॥

गन्धर्वयोगिनी—तर्हि फलितमचिरादेवाभिनवयाः कुलदेवतायाः ज्योतिर्मयदेवस्य तयैव स्वप्नप्रसादकल्पलतया ततस्ततः ।

अनेन प्रकृतकार्यहेतुस्वप्नप्रसादवस्तुन उपक्षेपणात् सन्धिर्नामाङ्गम्।

बीजस्योपगमो यस्तु स सन्धिः कथ्यते बुधैः।

अरुन्धती—अनन्तरमभवदम्बरचरनितम्बिनीनिकुरुम्बे कोऽपि कलकलः।

गन्धर्वयोगिनी—कथमिव।

अरुन्धती—

प्रथमं विनिद्रनयनाब्जदामभिःसुदृशा वृतोऽजनि य एव वल्लभः।
अवृणोन्मधूककुसुमस्रजा पुनः सुतनुस्तमेव ननु नञ्जभूपतिम्॥

अनेन प्रथमलब्धस्यार्थस्य पुनर्वर्णनेव स्थिरीकरणात्स्थितिर्नामाङ्गम्।

लब्धस्य वस्तुनो यत्तु सा स्थिरीकरणं स्थितिः।

गन्धर्वयोगिनी-अहो, अनुरूपवरसङ्घटनचातुरी कुलदेवतायाः स्वर्णाम्बिकायाः।

अरुन्धती-युक्तमुक्तम्। अत एव—

दिष्ट्या कुन्तलभूमिपालसदने जातैव लक्ष्मीः स्वयं
दिष्ट्याऽस्या वरसङ्ग्रहे कुतुकिनी गङ्गाधरस्याङ्गना।
दिष्ट्या नञ्जविभुं विलाससदनं कन्या वृणोति स्म सा
दिष्ट्याऽद्यैव महोत्सववस्तु भवतीत्यानन्दसान्द्रं जगत्॥

अनेनाद्भुतावेशसूचनदुपगूहनं नामाङ्गम्।

अद्भुतार्थस्य सम्प्राप्तिरुपगूहनमुच्यते।

गन्धर्वयोगिनी—समुचित एवानन्दः सर्वजगताम्। तादृशो महापुरुषो वरः कन्यकानामन्यथा कथं सम्भवेत्।

पश्य।

क्व गाम्भीर्यं तादृक् क्व नु स विनयोऽनन्यसुलभः
क्व वा भक्तिस्तावत्यनितरसमा चन्द्रमकुटे।
क्व सा लावण्यश्रीर्मदनमहिता किं नु बहुना
क्व चान्ये भूपाला नरपतिसभापूरणफलाः॥

अनेन चन्द्रकलालाभानुगुण्येन प्राप्तकार्यस्य स्वयंवरस्यानुमोदनादाभाषणम् नामाङ्गम्।

आभाषणमुपन्यस्तं प्राप्तकार्यानुमोदनम् ।

अरुन्धती—अत एव तस्य कळलेकुलजलधिकल्पतरोर्वीरराजसुकृतपरिपाकस्य परस्य विभोः समक्षमेव परस्परमपवार्य दूयमानमनसां महीभृतामित्थमुदलसन्नालापाः ।

गन्धर्वयोगिनी—कथमिव ।

अरुन्धती—

धिक् त्वा पुमानिति मुधा भ्रमदन्तरङ्गः
कन्याशया कथमिहागतवान्विलज्जः ।
भ्रातर्यथा त्वमहमागतवांस्तथैव
प्रायः प्रकाशयति को नु जनः स्वदोषान् ॥

अनेन—अन्योन्यगर्हणं यत्तत्परिभाषणमुच्यते ।

इत्युक्तलक्षणं परिभाषणं नामाङ्गं सूच्यते ।

गन्धर्वयोगिनी—भवतु यथातथावा । किं निवृत्ता विबुधराज्ञी ।

अरुन्धती—नहि नहि । श्वो मौहूर्त्तिकं पुरोगमविहिते त्रिभुवनक्षेमङ्करे वर्द्धमानहिमकरावलम्बिनि प्रातरेव दिवसे लग्ने महिते करिष्यमाणं तयोः पाणिग्रहणमहोत्सवमपि विलोक्य पूजिता पुनरागमिष्यति ।

अनेन नायिकाप्राप्तिरूपकार्यस्यानुगुण्येन पाणिग्रहणरूपार्थस्यारम्भसूचनाद्ग्रथनं नामाङ्गम् ।

अर्थस्यारम्भणं यत्तद्ग्रथनं परिकीर्त्यते ।

गन्धर्वयोगिनी—तर्हि तत्समक्षमेव महोत्सवदर्शनसुखमनुभवितुं महीतलमवतरामि । ( इति तथाकरोति )

अरुन्धती—अहमपि श्वः प्रातराचरिताग्निहोत्रविधिनैव भगवता वसिष्ठेन सह प्रजविना विमानेनैवामुमागत्य मत्पूजासमयं प्रतिपालयिष्यामि । ( इति निष्क्रान्ता )

गन्धर्वयोगिनी—कथमवतीर्णमेव मया कुन्तलराजनगरम् । यत्र—

सौवर्णशृङ्गचरचारुकपोतकौघचञ्चूविखण्डितघनाघनगर्भकीर्णैः ।
सूक्ष्मैरियं जलकणैः कृतनीरयन्त्रा हर्म्यावली वितनुते कुतकं ममाक्ष्णोः

यतः—

तुर्यकोटिपरिणद्धकौतुकाः (?) कन्यकां प्रतिगृहं पुराङ्गनाः।
प्रापयन्ति नवरत्नभूषणैर्भूषयन्ति रचयन्ति चाशिषः ॥

अनेन नायिकापरिणयस्येष्टत्वसूचनात्पूर्वभावो नामाङ्गम्।

इष्टार्थदर्शनं यत्तु पूर्वभावः स कीर्त्तितः।

महोत्सवेनाप्यनतिचिरं वर्त्तमानेन भवितव्यम्।

यतः—

बद्धयन्ते परितोऽपि तोरणगणा रत्नावलीनिर्मिताः
कीर्यन्ते प्रतिवीथि लाजनिकरैः साकं प्रसूनानि च।
नह्यन्ते कदलीद्रुमाः प्रतिगृहस्तम्भं विनानानि च
स्त्यायन्ते प्रतिकायमानपटलं पौरैर्नितान्तादरैः ॥

आः कोऽयमिदानीं कनकबिन्दुचित्रिताम्बरकुथः कुञ्जरः केनचिदाधोरणेन परस्य विभोः शिबिरमनुनीयते।

( विचिन्त्य ) स्मृतं स्मृतम्।

सुवर्णपर्यङ्कवहो विलोलद्घण्टानिबद्धोभयपार्श्वभागः।
शृङ्गारितोत्तुङ्गतनुर्हि सोऽयं मार्त्तण्डनामा वरवारणेन्द्रः ॥

तत्तर्कयामि महाराजः कलुलेपुरजलधिचन्द्रो नञ्जमहीन्द्रो रथ्यायां निर्गमिष्यतीति। दृष्टं च मया प्रणिधानेन परोऽपि महाराजः संप्रति पुरोधसा सचिवेन यथोचितपरिजनेन च परिवृतः क्रियमाणकौतुकमङ्गलः शिबिरमधिवसतीति। तद्भवतु। अग्रवर्त्तिनीमस्मत्स्वामिनीमुपसरामि।

( इति निष्क्रान्ता )

रङ्गनेपथ्यसंस्थायी पात्रसंलापविस्तरैः।
आदौ केवलमङ्कस्य कल्पिता खण्डचूलिका ॥

( ततः प्रविशति यथानिर्दिष्टो राजा )

पुरोधाः—

नृपकन्यकापरिणयात्तकौतुकं समुदीक्ष्य नञ्जनरपालशेखरम्।
धरणीसुताकरपरिग्रहोत्सुकं रघुनन्दनं स्मरति सर्वतो जनः ॥

राजा—( सानन्दम् )

राजानः कति वा न सन्ति धरणीरक्षाधुरीणव्रताः
तेषामन्यतमोऽहमस्म्यपि मया सञ्चिन्त्यसे वा न वा।

वात्सल्यं कथमीदृशं तव मयि ज्योतिर्मयेशोदितं
यद्यत्नादभिकाङ्क्षतो गजमुखः षाण्मातुरश्चान्वहम् ॥

पुरोधाः—विनयः खलु भूषणं भवादृशानाम् । परमार्थतः पुनर्भवान्न नरपतिसाधारणः । किन्तु सक्षादेव श्रीपतेरवतारः । किञ्च । कळुलेनृपति कुल-जनितमात्रस्यापि संरक्षणं नाम किमपि दैनंदिनव्रतं कुलदेवताया ज्योतिर्मये-शस्य, किं पुनर्निजैकशरणस्य भवतः ।

अमात्यः—सत्यमुक्तं श्रीपतेरवतारः शिवैकशरणो देव इति । सत्स्वप्य-नेकेषु राजसु भगवांश्चन्द्रचूडो धवलकमलमालिकाव्याजेन साक्षादिन्दिरांशा-वतारां कन्यामर्पितवान् ।

पुरोधाः—यदत्र दामनि यवाङ्कुरदर्शनमतो मन्ये न केवलं कन्याम् । किन्त्वचिरेण भविष्यन्तं कमपि पुत्रञ्च ।

अमात्यः—इदमेवाशास्यमखिलजगताम् । तथाहि—

आज्ञा चेदखिलावनीपमकुटीकोटिप्रियंभावुका
राज्यश्रीर्यदि निर्जराधिपतिनाऽप्यभ्यर्थनीया सदा ।
तत्तादृग्गुणभूषणस्य जयिनो नञ्जप्रभोः सन्तते-
र्वृद्धिप्रार्थनतः किमन्यदखिलैराशासनीयं जनैः ॥

पुरोधाः—भवतु तथैव । अमोघनिर्गमाः खलु द्विजाशिषः ।

राजा—( साशंसम् ) शिरसि विभूषिता महीसुराशिषः ।

( नेपथ्ये )

कुतुकाय देवस्य भवतु भास्वदभ्युदयः । अद्य खलु—

वेगेन प्रतिसद्म निष्कुटमहीनिद्रायिताः पद्मिनी-
स्त्वत्पाणिग्रहणोत्सवं कथयितुं नूनं करैर्बोधयन् ।
मीलत्पङ्कजबन्धनालयगतानिन्दीवरान्मोचय-
न्नुद्यद्विद्रुमपल्लवच्छविरसावभ्युज्जिहीते रविः ॥

( प्रविश्य वेत्रमाघट्टयन् कञ्चुकी )

देव, देवी विज्ञापयति । समागतो महोत्सवसमयस्त्वर्यतामिति ।

राजा—यदाह मम हृदयं देवी । ( अमात्यं प्रति ) तदानीयतां प्रसा-धनविधिः ।

अमात्यः—देव

बन्दीगृहोन्मुक्तनृपालवर्गैः सम्बन्धिराजेन च मङ्गलाय।
सम्प्रेषितो भूषणराशिरास्ते कस्मिन् विभोरद्य मनः प्रमाणम् ॥

राजा—नृपतिभिर्यः प्रेषितः स समानीयताम्। अन्यः पुनरथ भविष्यति।

सर्वे—अहो, परकीयगुणग्राहिता देवस्य।

अमात्यः-(कञ्चुकिनं प्रति) रत्नभूषणभाजनपाणिः पुरुषः प्रवेश्यताम्।

कञ्चुकी तथेति (निष्क्रान्तः) (प्रविश्य यथोक्तः पुरुषो राजानं यथाविधि भूषयित्वा निष्क्रान्तः)

(नेपथ्ये मङ्गलतूर्यघोषो द्विजाशिषश्च)

राजा—सपरिवारः सत्वरं शिबिराद्बहिरागच्छति।

परिजनः—

एते विनम्रमकुटीमणिकान्तिपूर
लाक्षारसार्णवनिमज्जितराजमार्गाः।
व्यालोलभूषणझणत्कृतिपूरिताशाः
स्वामिन्नमन्ति नरपालगणा भवन्तम् ॥

अमात्यः-अये कः कोऽत्र भोः। कुञ्जरः समानीयताम्।

(प्रविश्य कुञ्जरेण सह पुरुषो राजानं प्रणमति)

परिजनः—देव दृश्यताम्।

कुम्भस्थले समधिरोप्य सृणिं शिताग्रं
शुण्डां प्रकामपृथुलां भृशमुन्नमय्य।
आकुञ्चिताग्रपदमुद्गतबृंहितं च
स्वामिन् प्रणम्रयति कुञ्जरसार्वभौमः ॥

अमात्यः-सफलीक्रियतां सज्जोऽयं वारणराजः। अनेन पर्युपासनरूपः प्रसादो नामाङ्गं सूच्यते।

पर्युपासनमार्याणां प्रसाद इति गीयते इति।

(राजा—तथेति गजारोहणं नाटयति)

परिजनः—महाराज, अद्यहि—

सौधस्थाः कुसुमैः समं मृगदृशो वर्षन्ति लाजान् बहून्
नृत्यन्त्यत्र समं च मद्दलघनध्वानेन वाराङ्गनाः।

पद्यैरत्र परिष्टुवन्ति महितैरानन्दिनो वन्दिनः
केचिच्छिल्पकृतस्तु यन्त्रनिवहैष्टात्कारयन्ते दिशः ॥
(प्रविश्य पटाक्षेपेण मध्येमार्गं पुरुषः प्रणम्य)

देव, कावेरीसिन्धुसङ्गमे द्वीपान्तराच्चण्डानिलानीतं किमपि रत्नपूर्णं यानपात्रं श्वेताचलदुर्गसमीपदृष्टो निधिश्चेत्युभयमपि देवस्य महोत्सव इति तदधिकारिभ्यां प्रेषितं वर्तते ।

पुरोधाः—देवताया लक्ष्म्या अवताराया: कन्यकायाः परिगृहसमये समागत एव निधिः ।

( इति प्रशंसति )

राजा—( अमात्यं प्रति ) तदुभयमपि विभज्य दीयतामुत्सवसमयसमुदितेभ्यो द्विजेभ्यः ।

अमात्यः—यदादिशति महराजः ( इति निष्क्रान्तः )

परिजनः—अयं पुनः सम्बन्धिराजो रत्नाकरो देवं प्रत्युद्गच्छति ( प्रविश्य सानन्दं रत्नाकरः )

चिरन्तना ये मम वंशवृद्धास्तपोविशेषैः परिचेरुरम्बाम् ।
तेषां फलं सम्प्रति जातमास्ते सम्बन्धरूपं शशिनः कुलेन ॥

तदिदानीं जामातरं राजानं कन्यान्तःपुरमधिनीय प्रकृतं साधयामि । ( परिक्रम्य राजानमुपसृत्य ) इयं कन्याभिरलङ्कृतस्यान्तःपुरस्य सरणिः ।

राजा—(गजादवतीर्य सपरिवारः कन्यान्तःपुरप्रवेशं नाऽयति )

रत्नाकरः—महाराज, इयमियं कल्याणवेदिका परिष्क्रियताम् ।

राजा ( तथाकुर्वन् पुरोधसं परिजनं च यथोचितमुपवेष्टुमनुमनुते । सर्वे यथोचितमुपविशन्ति )

रत्नाकरः—भोः कञ्चुकिन्, कन्या समानीयताम् ।

कञ्चुकी—तथेति ( निष्क्रम्य कन्यया सह पुनःप्रविशति )

पुरोधाः—रत्नाकर, समयोऽयं महोत्सवस्य ।

रत्ना—सज्जोऽस्मि ( इति कन्यामङ्कतटे कुर्वन् )

कळले पुरवाराशिपूर्णेन्दो नञ्जभूपते ।
प्रतीच्छ कन्यकामेनां कल्याणगुणशालिनीम् ॥
( इति तस्याः करं राज्ञो वरस्य करे अर्पयति )

राजा—( स्वगतम् ) लब्धमनोरथोऽस्मि ।

पुरोधाः ( लाजहोमादिकं यथावत्कारयति )

कन्या—( स्वगतम् )

चंदो अज्जव्व हिमंसू सुरहिअ अज्जव्व महुमासो ।
अज्जव्व कुसुमधणुहो महणो मह णाहहत्थलग्गाए ॥

अनेन आर्त्तेरुपशमकथनात् समयो नामाङ्गम् ।

आर्त्तेरुपशमो यः स्यात् समयः परिकीर्त्तितः ।

रत्नाकरः–(सानन्दं) राजन् । राजकुलतिलक

दुःसाधां मे पूरयित्वा प्रतिज्ञां राज्ञां मध्ये जातकन्यामणीनाम् ।
श्लाघायोग्यं कुर्वतो मामिदानीं भूयः किं वा कल्पयामि प्रियं ते ॥

अनेन कार्यार्थस्योपसंहृतिकथनादुपसंहारो नामाङ्गम् ।

कार्यार्थस्योपसंहारो यस्तु सैवोपसंहृतिः ।

अस्यैव समर्थफलसम्पत्तिसूचकत्वात् फलागमो नामार्थस्थितिः ।

समग्रफलसम्पत्तिः फलागम उदाहृतः । इति ।

राजा—

ज्योतिर्मयेशदेवस्य सविशेषप्रसादतः ।
त्रिलोक्यमान्या लब्धेयमितोऽप्याशास्यमस्ति किम् ॥

अनेन वाञ्छितार्थप्राप्तिकथनादानन्दो नामाङ्गम् ।

वाञ्छितार्थस्य सम्प्राप्तिरानन्द इति गीयते ।

अस्यैव मुख्यार्थत्वात् कार्यं नामार्थस्थितिः ।

मुख्यार्थो यस्तु कथितः कार्यं तदिति कीर्त्यते ।

तथाऽपीदमस्तु भरतवाक्यम्–

वाणीयं भुवि वर्धतां बुधजनश्लाघ्या त्रिलोकीजुषां
सौभाग्यैकनिकेतनश्च शशिनो वंशः सदा वर्धताम् ।
देवश्चन्द्रकलाधरश्च दयया निर्व्याजमाप्यायितो
नित्यं नञ्जमहीमहेन्द्रहृदये वासं विधत्तां मुदा ॥

अनेन शुभप्रशंसाकथनात् प्रशस्तिर्नामाङ्गम् ।

शुभप्रशंसनं सम्यक् प्रशस्तिरिति गीयते ।

---

( छा ) चंद्रोऽद्यैव हिमांशुः सुरभिरद्यैव मधुमासः । अद्यैव कुसुमधनुः मदनो मम नाथहस्तलग्नायाः।

तदेवं फलागमकार्ययोः सन्धिः साङ्गो निर्वहणसन्धिः ।

रत्नाकरः—तदिदानीमार्द्राक्षतारोपणमाङ्गलिकनीराजनादिमहोत्सवानुभवाय कन्यया सह कनकसिंहासनमधितिष्ठतं भगवन्तं द्रष्टुमुत्कण्ठिताः स्मः ।

कन्या—[ स्वगतम् ] अणुमदं मे ।

राजा-परमम्

( इति निष्क्रान्ताः सर्वे पञ्चमोऽङ्कः )

इति चंद्रकलाकल्याणे

इति श्रीपरमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादितनिस्सहायदैनन्दिनप्रवन्धनिर्माणसाहसिकनिखिलविद्वज्जनलालनीयसरससाहितीसम्प्रदायप्रवर्त्तकनरसिंहकविरचितेनञ्जराजयशोभूषणे-अलंकारशास्त्रे नाटकप्रकरणं नाम षष्ठोल्लासः ॥

---

# अथ सप्तमो विलासः ।

करुणारसकल्लोलकलितापाङ्गवीक्षणम् ।
कन्दर्पजनकं धाम कल्याणानि करोतु नः ॥

अथ काव्यमुख्यार्थभूतस्य रसस्य समवायवृत्त्या रसोपस्कारगुणनिरूपणानन्तरं संयोगवृत्त्या रसोपस्कारकालङ्कारनिरूपणं क्रियते । अलङ्क्रियतेऽनेनेति चारुत्वातिशयहेतुरलङ्कारः । तथोक्तं काव्यप्रकाशे—

'उपस्कुर्वन्ति तं सन्तं योऽङ्गद्वारेण जातुचित् ।'
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥

यथा करचरणाद्यवयवगतैर्वलयनूपुरादिभिस्तदलङ्कृतितया प्रसिद्धैरवयव्येवाऽलङ्क्रियते तथैव शब्दार्थावयवगतैरनुप्रासोपमादिभिस्तदलङ्कारतया प्रसिद्धैरवयविभूतं काव्यमेवोपस्क्रियते । आश्रयाश्रयिभावेनालङ्कार्यालङ्कारकभावो लोकवत् काव्येऽपि सम्मतः । तथा चालङ्कारः शब्दार्थोभयगतत्वेन त्रिविधः । अर्थालङ्काराणां चातुर्विध्यम्-केचित् प्रतीयमानवस्तवः, केचित् प्रतीय-

( छा ) अनुमतं मे ।

मानौपम्याः, केचित् प्रतीयमानरसभावादयः, केचिदस्फुटप्रतीयमाना इति । समासोक्तिपर्यायोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानानन्वयातिशयोक्तिपरिकराप्रस्तुतप्रशंसाऽनुक्तनिमित्तविशेषोक्तिषु प्रतीयमानं वस्तु काव्योपस्कारतामुपयाति। रूपकपरिणामसन्देहभ्रान्तिमदुल्लेखापह्नवोत्प्रेक्षास्मरणतुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तसहोक्तिप्रतीपव्यतिरेकनिदर्शनाश्लेषेष्वौपम्यं गम्यते । रसवत्प्रेय ऊर्जस्विसमाहितभावोदयभावसन्धिभावशवलनासु रसभावादिर्व्यज्यते । उपमाविनोक्तार्थान्तरन्यासविरोधविभावनोक्तगुणनिमित्तविशेषोक्तिविषमसमचित्राधिकान्योन्यकारणमालैकावलीव्याघातमालादीपककाव्यलिङ्गानुमानसारयथासङ्ख्यार्थापत्तिपर्यायपरिवृत्तिपरिसङ्ख्याविकल्पसमुच्चयसमाधिप्रत्यनीकप्रतीपविशेषमीलनसामान्यसङ्गतितद्गुणातद्गुणव्याजोक्तिवक्रोक्तिस्वभावोक्तिभाविकोदात्तेषु सहृदयहृदयास्वादि स्फुटं प्रतीयमानं नास्ति । अत्रेत्थमलङ्कारकक्ष्याविभागः ।

साधर्म्यं त्रिविधम् । भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेति । उपमानोपमेययोः स्वतो भिन्नत्वात् शाब्दमेतन्नावासम् । रूपकपरिणामसन्देहभ्रान्तिमदुल्लेखापह्नवानामभेदप्रधानसाधर्म्यमूलता । उत्प्रेक्षातिशयोक्ती अध्यवसायमूले । विभावनाविशेषोक्तिविषमविचित्रासङ्गत्यन्योन्यव्याघातातद्गुणभाविकविशेषाणां विरोधमूलता । यथासङ्ख्यपरिसङ्ख्यार्थापत्तिविकल्पसमुच्चयानां वाक्यन्यायमूलता । पर्यायपरिवृत्तिप्रत्यनीकतद्गुणसमस्वभावोक्त्युदात्तविनोक्तयो लोकव्यवहारमूलाः । काव्यलिङ्गानुमानार्थान्तरन्यासास्तर्कन्यायमूलाः । कारणमालैकावलीमालादीपकसाराः शृङ्खलावैचित्र्यमूलाः । व्याजोक्तिवक्रोक्तिमीलनान्यपह्नवमूलानि । समासोक्तिपरिकरौ विशेषणवैचित्र्यमूलौ ।

अथालङ्काराणां परस्परवैलक्षण्यं निरूप्यते ।

आरोपगर्भत्वेऽप्यारोप्यमाणगर्भस्य प्रकृतोपयोगानुपयोगाभ्यां परिणामरूपकयोर्भेदः । आरोपविषयस्यारोप्यमाणसंभवासंभवाभ्यामुल्लेखरूपकयोर्भेदः। आरोपविषयस्य सन्देहभ्रान्त्यपह्नवैः सन्देहभ्रान्त्यपह्नवानां परस्परभेदः । साधर्म्यमूलत्वेऽपि तुल्ययोगितादीपकनिदर्शनाव्यतिरेकदृष्टान्तेभ्यः साधर्म्यस्यवाच्यत्वादुपमानन्वयोपमेयोपमा भिद्यन्ते । साधारणधर्मस्य वाच्यत्वगम्यत्वाभ्यामुपमेयोपमाप्रतिवस्तूपमयोर्भेदः । वस्तुप्रतिवस्तुबिम्बप्रतिबिम्बभावाभ्यां प्रतिवस्तूपमादृष्टान्तयोर्भेदः । प्रस्तुताप्रस्तुतानां व्यस्तसमस्तत्वाभ्यां तुल्ययो-

गितादीपकयोर्भेदः उपमानस्य प्रसिद्धत्वाप्रसिद्धत्वाभ्यां उपमानोत्प्रेक्षयोर्भेदः। अर्थसाम्यशब्दसाम्याभ्यां उपमाश्लेषयोर्भेदः। उपमानोपमेययोर्भेदाभेदाभ्यामुपमानन्वययोर्भेदः। उपमानोपमेयभावस्य पर्याययौगपद्याभ्यां उपमेयोपमोपमेयोर्भेदः। अप्रस्तुतस्य वाच्यत्वगम्यत्वाभ्यामप्रस्तुतप्रशंसासमासोक्त्योर्भेदः। वाच्यव्यङ्ग्ययोरुभयोः प्रस्तुतत्वे पर्यायोक्तिः। वाच्यस्याप्रस्तुतत्वेऽप्रस्तुतप्रशंसा। व्याप्तिपक्षधर्मताद्यभावात् काव्यलिङ्गस्यानुमानाद्भेदः। साधारणगुणयोगात् भेदानुपलब्धौ सामान्यम्। उत्कृष्टगुणयोगात् न्यूनगुणतिरोधाने मीलनम्। अन्यव्यवच्छेदस्य तात्पर्याभावादुदात्तालङ्कारस्य परिसङ्ख्यातो भेदः। काकतालीयनयात् कार्यसाधने कारणान्तरोपनिपाते समाधिः। अहमहमिकया कार्यसाधने बहूनां कारणानामुद्यमने द्वितीयसमुच्चयः। निह्नवस्य वाच्यत्वगम्यत्वाभ्यामपह्नवव्याजस्तुत्योर्भेदः। अन्येषां भेदः स्पष्ट एव। यद्यपि व्याजोक्तिमीलनसामान्येषु कथञ्चित् सादृश्यमस्ति अथाप्यस्याविवक्षितत्वात् न सादृश्यमूलेषु गणना।

इत्यलङ्कारस्वरूपविभागः

अर्थप्रतीतेः शब्दप्रतीतिपूर्वकत्वात् प्रथमं शब्दालङ्कारा निरूप्यन्ते।

'भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः।
आवृत्तिर्यत्र सबुधैश्छेकानुप्रास इष्यते॥'

यत्राव्यवहितयोर्व्यञ्जनयुग्मयोः पौनरुक्त्यं तत्र छेकानुप्रासः।

यथा—

कविनुतशुभवति भवतिश्रीकरशुभलग्नभुवन नञ्जविभो।
वैभवविजितामर्त्याः मर्त्या रज्यन्ति सर्वदा मुदिताः॥
एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि।
सङ्ख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः॥

यथा—

नञ्जक्षोणिक्षिदध्यक्षरिङ्खत्कौक्षेयको रणे।
दक्षते दृप्तहर्यक्षवक्षःशिक्षणदक्षिणः॥ ( प. २१ )

यथावा—

भ्राम्यन्मत्तमदावलेन्द्ररदितप्राग्भारसंवर्गित—
स्फारोद्विक्रममाणतुङ्गतुरगप्रक्रान्तहेषोद्धताः।

शस्त्राशस्त्रिविखण्डिताहितशिरोरुण्डैः प्रचण्डक्रमैः
वैधात्रस्य मुनेर्मदं विदधते नञ्जक्ष्माभृद्भटाः ।
तात्पर्यमेव भिन्नं स्यान्न तु शब्दार्थयोर्भिदा ।
तयोर्यत्पुनरुक्तिः स लाटानुप्रास इष्यते ॥

यथा—

सकलकलारसिकमतौ दातरि नञ्जक्ष्मापते भवति ।
सम्प्रति कवयः कवयो भासन्ते धरणिमभितोऽपि ॥

पुनरुक्तवदाभाति यत्रार्थो न तु तत् पदम् ।
पुनरुक्तवदाभासः स नामाख्यातगो द्विधा ॥

अत्र नामगतपुनरुक्तवदाभासो यथा—

शक्तिमांश्च महासेनो धाताऽपि चतुराननः ।
राजराजोऽपि धनदो राजते नञ्जभूपतिः ॥

आख्यातगतपुनरुक्तवदाभासो यथा—

कल्पते जेतुमिन्द्रं श्रीर्नञ्जेन्द्र शशिकल्प ते ।
मन्दतेजाभवत्कान्त्या भास्वान् व्योमनि मन्दते ॥

मन्दते गच्छतीत्यर्थः । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु इति धातुः ।

'यमकं पौनरुक्त्ये नु स्वरव्यञ्जनयुग्मयोः ।'

छेकानुप्रासे वृत्त्यनुप्रासे च स्वरपौनरुक्त्यमानुषङ्गिकम् । यमके तु सस्वरयोर्व्यञ्जनयुग्मयोरेवावृत्तिः । तस्य आदिमध्यान्तगतत्वेन बहवो भेदाः । तत्र दिङ्मात्रमुदाह्रियते । यथा—

नञ्जेन्द्र धरणीरत्न धनञ्जयधुरन्धर ।
देहि नित्यं मनीषिभ्यो धनं जय धुरं धर ॥

अत्र धनं देहि जय धुरं धर भारं वह इत्युत्तरार्धे । पूर्वार्धे तु धनञ्जय धुरन्धर–श्रेष्ठ, इत्यर्थः ।

'पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।'

आदिग्रहणात् हारबन्धादयः । तत्राष्टदलपद्मबन्धो यथा—

या सौम्भमदभङ्गायाया रेखात्मशशिश्रिया ।
याऽगुराढ्या रुद्रजायायाऽऽशिभाएष्यदां धिया ॥

या सौंभमद्भङ्गा। सौम्भो नामासुरः। तत्सम्बन्धी सौम्भः यो मदः तस्य भङ्गः। स एव आयः शुभावहविधिः तमयत इति सौम्भमदभङ्गायाया दैत्यविशेषसंहारिणीत्यर्थः। या रेखात्मशशिश्रिया। रेखाकारचन्द्रकान्त्या आढ्या सम्पन्ना चन्द्रकलाधारिणीत्यर्थः। अगुः न विद्यंते गावः यावत्स्वरूपप्रतिपादकशब्दा यस्याः सा अगुः। एच इग्घ्रस्वादेशः। वाचामगोचरेत्यर्थः। या रुद्रजाया। आशिभाः आशिन्यः व्याप्ताः भासः कान्तयः यस्याः सा। त्रिजगद्व्याप्तेत्यर्थः। ता(ए?)ष्यदां। एष्या एषणीया आशंसिनीया इत्यर्थः। तानर्थान् ददातीति एष्यदां आशंसितसकलफलप्रदामित्यथः। तां धिया बुद्ध्या अय प्राप्नुहि भावयेत्यर्थः। ईगताविति धातोर्लेटि मध्यमपुरुषैकवचनम्।

अत्राष्टदलपद्मोद्धारक्रमः। अष्टदलपद्मं लिखित्वा कर्णिकायां या इति वर्णं विलिख्य द्वितीयवर्णमेकस्मिन् दले विलिख्य उत्तरवर्णद्वयं दलद्वयान्तराले विलिख्य [ दलान्तरे उत्तरवर्णमेकं विलिख्य दलद्वयान्तराले तदुत्तरवर्णद्वयं विलिख्य ] कर्णिकागतवर्णं द्विरुच्चार्य अनन्तरवर्णानेवमेव विलिखेत्। द्वितीयवर्णमारभ्य दलमात्रलिखितवर्णसमुदायपठने सौन्दरेशगुरुशिष्य इति कृतिनायकसम्बोधनं भवति। यद्वा तत्र (त्रित्रि?) वर्णान् दलेषु विलिख्य प्रथमवर्णसमुदायपठनं वा। प्रकारान्तरेण अष्टदलपद्मबन्धलेखनं भवति। यथा—

रापाब्धिसाससभ्यावितशुभमतिरा ज्यारवत्रासितारा-
रातासित्रावर ज्याऽस्तु तव महधरायाव पक्ष्माजनं रा।
रा नञ्जक्ष्माप वर्या महितफलकिरा प्राविदश्रीयमारा
रामाय श्रीद विप्राश्रित शिशिरकराभ्यास ससाब्धिपारा॥

राः दातारः ताः(न्?) पातीति रापः स चासावब्धिश्चेति रापाब्धिः क्षीरसागर इति यावत्। तस्य साः कचसमुदायाः। ताभिः ससभ्यः समानसभाप्रवेशी, गाम्भीर्यनैर्मल्यादिगुणैः क्षीरसमुद्रेण शिरसा श्लाघनीय इत्यथः। तस्य सम्बुद्धिः। अवितशुभमतिराः। अवितानि रक्षितानि शुभानि यया सा मतिः तां रातीति अवितशुभमतिराः। ज्यारवत्रासिताराराता—ज्यारवैः मौर्वीनिनादैः त्रासितं—भीषितं—आरातं अरातिसमूहः। अरातिशब्दात्समूहार्थेऽण्। तस्य सम्बुद्धिः ज्यारवत्रासिताराराात। असित्रावर असिभिस्त्रायते आत्मानमित्यसित्राः शूराः, तानवरयति अधरयतीति तथोक्तः, तस्य सम्बुद्धिः, सर्वापेक्षया शूर इत्यर्थः। रामाय। रामाः स्त्रियः तासामयः शुभविधिः स्त्रीणां नेत्रप्रियङ्कर

इति यावत् । तस्य संबुद्धिः हे रामाय । श्रीद । शिशिरकराभ्यास शिशिरकरस्य चन्द्रस्य अभ्यासः पुनरुक्तिः । तस्य सम्बुद्धिः । चन्द्र एवेति व्यवहर्त्तव्य इत्यर्थः । विप्राश्रित महधरार्य महधराणामुत्सवशालिनामार्य नित्यानन्देत्यर्थः । नञ्रक्ष्माप बुद्ध्या पक्ष्माजनं पः आर्त्तः क्ष्माजनः महीतलजनः तं अव बुद्धिपूर्वकमार्त्तजनरक्षणं कुर्वित्यर्थः । 'ककारः कुञ्जरे शैलेधीभेदे देवमातेरि' । 'पःस्त्री चार्त्ते प्रयत्ने चेत्युभयत्रापि नानार्थरत्नमाला । ततः किं फलं इत्यत आह । सप्ताब्धिपारा । सप्तसमुद्रान्ता।ज्या महितफलकिरा महितानि श्रेष्ठानि फलानि किरतीति तथोक्ता । प्राविद्श्रीयमारा । प्रकृष्टा अवित् [अ]ज्ञानं तदेवाश्रीः तां यान्तीति प्राविद्श्रीयाः । अत्यन्ताविवेकिन इत्यर्थः । तान् मारयतीति प्राविद्र्श्रीयमारा । पदाद्युत्पादनेन अविवेकिनामपहर्त्री वर्या पूज्या [अस्तु] राः कनकं सुवर्णमस्तु ।

हारबन्धो यथा—

वीरक्ष्मारक्षरत्नोदित दितदिनपङ्क्तपतापप्रभाव
भागुम्भाक्रान्तचेतस्ति(श्रि?)तसम ? समरेमभ्रमद्व्योमराम ।
साराकारा मरालीरुचिरुचिरुचितस्फीतमातद्यशश्रीः
शस्ता शक्रेभदा भद्रभर तव तमान्तव्रजन् नञ्रराज ॥

वीरक्ष्मारक्षरत्नात् वीरभूपालश्रेष्ठात् उदितः तस्य संबुद्धिः । दितः खण्डितः दिनपतां दिनपमिवात्मानमाचरताम् । दिनपशब्दात्कर्त्तरिक्विप्प्रत्यये तुगागमः । क्रूराणामित्यर्थः । भूपानां ताप प्रभावो येन सः, तथोक्तः, तस्य सम्बुद्धिः । अत एव समरे मभ्रमद्व्योमराम–माय–जनाय भ्रमन्त्यः व्योमरामाः देवकान्ता यस्य स तथोक्तः । तस्य सम्बुद्धिः । सुराङ्गनानां समरे सञ्चरणं सर्वलोकसिद्धम् ।

'माऽव्ययं प्रतिषिद्धे च जने तु स्यान्नपुंसकम् ।'

भद्रभर—भद्रं बिभर्त्तीति भद्रभरः । तस्य सम्बुद्धिः ।

तमान्तव्रजन्—तमं ग्लानिः । तं अन्तयन्ति बन्धयन्तीत्यन्ततः 'अति बन्धन' इति धातोरन्तर्भावितण्यन्ताच्छतृप्रत्ययः । तेषु व्रजन् ग्लानिनिवारकाणामग्रेसर इत्यर्थः । तस्य सम्बुद्धिः । हे नञ्रराज, साराकारामरालीरुचिरुचिः–मराल्यो हंस्यः तासां रुचयः तासामपि रुचिः । ततोऽप्यतिशेत इत्यर्थः । शक्रेभगा–शक्रेभः ऐरावतः । तंद्यति खण्डयतीति शक्रेभदा । कान्त्या ऐरावतं

निराकुर्वतीत्यर्थः । उचितास्फीता । मातङ्-मतति सदा गच्छतीति उचित-स्फीतमातन्ती । यशश्रीः यशसः परिपूर्तिः तासामीः-लक्ष्मीः । मित्रामित्रजनेषु यथोचितं शैत्योष्णत्वरूपेण अधिकप्रसारिणी यशोव्यापारकान्तिरित्यर्थः । सा तव शस्ता प्रशस्ता सर्वजनसन्नुतत्वेन प्रसिद्धत्यर्थः ।

एवं चक्रबन्धकोशबन्धमञ्जीरबन्धादयोऽप्यूह्याः ।

## अर्थालङ्काराः ।

तत्र प्रथममनेकालङ्कारबीजत्वा दुपमा निरूप्यते ।

साधर्म्यं लोकसिद्धेन भिन्नेन कविसम्मतम् ।
यदेकवाक्यवाच्यं स्यात् प्रकृतस्य मतोपमा ॥

प्रकृतस्य वदनादेस्ततो भिन्नेन राकासुधाकरादिना लोकसिद्धेनैकवाक्या प्रतिपाद्यं कविसमयसम्मतं कान्तिमत्त्वादिभिर्यत्साधर्म्यं समानधर्मसम्बन्धः स-उपमा । तत्र लोकसिद्धपदेनोत्प्रेक्षा व्यवच्छिद्यते । तत्र उपमानस्य कविप्रौ-ढोक्तिसिद्धत्वात् । भिन्नपदेनानन्वयालङ्कारनिरासः । तत्र एकस्यैवोपमानोपमेय-भावालिङ्गितत्वात् । वाच्यमित्यनेन गम्यौपम्यरूपकादिव्यवच्छेदः । कविसम्म-तमित्यनेन 'कुमुदमिव वदनम्' कारणविव कार्यम् इत्यादीनां हीनोपमादीनां च निरासः । नहि तत्र उपमानोपमेयभावः कविसम्मतः । न च कार्यकारणयोः साधर्म्यमेव नास्तीति शङ्कनीयम् । 'कारणगुणा हि कार्यगुणानारभन्ते' इति न्या-येन तत्रापि साधर्म्यस्य सम्भवात् । तत्र साधर्म्यं कविसमयसम्मतैरेव कान्त्या दिभिः स्वीकरणीयम् । एकवाक्यवाच्यमित्यनेनोपमेयोपमालङ्कारव्यावृत्तिः । तस्य वाक्यत्वे (द्वय ?) गोचरत्वात् । तच्च एकेनैवाश्लिष्टेन वा पदेनोपादेयम् । श्लिष्टपदोपादानेऽपि न श्लेषशङ्कातङ्कः । स्वतो भिन्नयोरपि धर्मिणोः शिष्टपदो-पादानेन भेदे सत्यपि अभेदरूपातिशयोक्तिबलादेकस्मिन्पथि पान्थतयाऽनुगतै-कधर्मत्वेनाङ्गत्वात् । तथा च एतादृशस्थले श्लेषप्रतिभोद्बोधितातिशयोक्त्यनुप्रा-णितोपमा ।

पूर्णलुप्तप्रकाराभ्यां सा तावद्द्विविधा भवेत् ।

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानां चतुर्णां प्रयोगे पूर्णा । तेषामेकद्वित्रिलोपे लुप्ता ।

श्रौतीत्यार्थीतिभेदेन पूर्णा सा द्विविधा मता ।

साक्षात्सादृश्यवाचकयथेवादिशब्दानां प्रयोगे श्रौती । धर्मिव्यवधानेन सादृश्यप्रतिपादकानां सदृशसङ्काशप्रतीकाशपदानां प्रयोगे आर्थी । ननु यथेवादिशब्दानामुपमानविशेषणतया न सादृश्यप्रतिपादनपटीयस्त्वमिति चेन्मैवम् । शब्दशक्तेस्तादृशत्वाद्यथा राजशब्दशिरोगता षष्ठी पुरुषमाक्षिपन्ती तदुभयनिष्ठसम्बन्धबोधने हि न पर्यनुयोगार्हा । तथेवादयोऽपि । वतौ तु विशेषः । 'तत्र तस्येवे'ति सूत्रोक्तवतिः साक्षात्सादृश्यप्रतिपादकेवार्थत्वात्तत्रैव श्रौती । 'तेन तुल्य'मित्यत्र वतिस्तुल्यं प्रतिपाद्य तन्निर्वाहाय सादृश्यमाक्षिपतीति तत्रार्थ्येव । द्विविधाऽपि सा वाक्यसमासतद्धितगतत्वेन त्रिविधा । [ एवं च ] सति पूर्णोपमा श्रौती आर्थी चेति षट्प्रकारा ।

तत्र समासगता श्रौती पूर्णोपमा यथा—

शक्रइव शौर्यसहितो रघुपतिरिव सत्यभाषणैकरुचिः ।
धनदइव सम्पदधिकः नेता नञ्जक्षितीश्वरो जयति ॥
शक्रइवेत्यादौ इवेन सह नित्यसमासः ।

वाक्यगता श्रौती पूर्णोपमा यथा—

यथा कर्णे यथा कल्पद्रुमे चिन्तामणौ यथा ।
तथा वदान्यता भाति महिता नञ्जभूवरे ।

तद्धितगता श्रौती पूर्णोपमा यथा—

विभाति वीरनञ्जेन्दौ कीर्तिः कल्पमहीजवत् ।
अहर्निशमनेकार्थविश्राणनविचक्षणे ॥

समासगता वाक्यगता तद्धितगता चेति त्रिविधाऽप्यार्थी

यथा—त्वत्कीर्त्तिःपरितो विभाति धवला राकेन्दुसंवादिनी
त्वं शौर्येण धनञ्जयेन सदृशो नञ्जक्ष्मावल्लभ ।
सन्त्राणे शरणार्थिनामनुदिनं त्वं रामवद्राजसे
भूपाला बहवो भवन्तु भवता भूरद्य राजन्वती ॥

अत्र राकेन्दुसंवादिनीति समासगता । धनञ्जयेन सदृश इत्यत्र वाक्यगता । रामवदित्यत्र साम्या(समाना?)र्थकवतिप्रत्ययस्वीकारात् तद्धितगता आर्थी । एषूदाहरणेषु उपमानोपमेयसाधारणधर्मप्रतिपादकानां प्रयोगात् पूर्णोपमात्वम् । अथ लुप्तोपमाया उदाहरणानि ।

अनुक्तधर्मवाक्यगता श्रौती लुप्ता यथा—

वीरक्ष्मापालतनूभवस्य नञ्जक्षितीन्द्रस्य मुखं मृगाक्ष्यः।
मुहुर्मुहुश्चन्द्रमिवावलोक्य यथेन्दुकान्तप्रतिमास्तथैव॥

चन्द्रमिवेत्यत्र—इवेन समासात् समासगता चेयमेव। उभयत्र साधारणधर्मानुपादानाद्धर्मलुप्ता। तत्र स्थलद्वयेऽपि सादृश्यवाचकपदप्रयोगाच्छ्रौती। सा च समासवाक्यगता द्विविधैव। सादृश्यार्थे विहितस्य वतेः प्रयोगे धर्मोपादानेनान्वयसौकर्यादनुक्तधर्मातद्धितगता श्रौती लुप्ता नास्त्येव। कल्पबादिप्रयोगे तु आर्थ्येव। अनुक्तधर्मा वाक्यसमासतद्धितगता चेति त्रिविधाऽप्यार्थी यथा—

कल्पद्रुकल्पं शशिनः कुलीनं नञ्जक्षितीन्द्रं सुधया सवर्णैः।
नवैः प्रबन्धैरभिनन्दयन्तः कुबेरतुल्याः कवयो भवन्ति॥

कल्पद्रुकल्पमित्यत्र तद्धितगता। सुधया सवर्ण इत्यत्र वाक्यगता। कुबेरतुल्या इत्यत्र समासगता। सर्वत्र धर्मानुपादानात् साक्षात्सादृश्यवाचकयथेवादिपदप्रयोगाभावाच्च धर्मलुप्ताऽऽर्थीयम्। तदित्थं पञ्चप्रकारा केवलधर्मलुप्ता।

अनुक्तधर्मेवादिः क्यचा लुप्ता यथा—

नञ्जेन्द्र भवतश्चापगलद्बाणोद्धतानिलाः।
पक्वतालफलीयन्ति मस्तकेषु विरोधिनाम्॥

अत्र पक्वतालफलीयन्ति—पक्वतालफलेष्विवाचरन्तीत्यर्थः। अत्राधिकरणाच्चेति वक्तव्यमिति विहितक्यचा लुप्तानुक्तधर्मेवादिः।

कर्मक्यचा लुप्ता यथा—

यानिन्धनीयत्यरिभूपवर्गान् नञ्जक्षितीन्द्रो तव कोपवह्निः।
तेष्वेव नम्रेषु पुनस्त्वदीया सुधातरङ्गीयति वीक्षणश्रीः॥

अत्र इन्धनीयति—इन्धनानिवाचरतीत्युपमानादाचार इति विहितकर्मक्यच्प्रत्ययलुप्तानुक्तधर्मेवादिः। अत्रैव सुधातरङ्गीयति सुधातरङ्गमिवात्मानमाचरतीति कर्तृक्यचालोपात् कर्तृक्यच्लुप्तानुक्तधर्मेवादेरिदमेवोदाहरणम्।

क्यचि(ङ?) यथा—

श्रीवीरनञ्जराजस्य प्राणिमात्रे दयारसः।
राकेन्दुबिम्बकिरणक्रान्तरत्नाकरायते॥

अत्र रत्नाकरायत इति रत्नाकरवदाचरतीति कर्तृक्यचो (ङो ?) लोपात् कर्तृक्यचा(ङा?) लुप्ताऽनुक्तधर्मेवादिः।

कर्तृणमुला यथा—

हिमांशुवंशरत्नस्य नञ्जेन्द्रस्य मुखाम्बुजे।
कटाक्षा हरिणाक्षीणां भृङ्गचारं चरन्ति हि ॥

अत्र भृङ्गचारं चरन्तीति 'उपमाने कर्मणि च' इति सूत्रस्थचशब्देन कर्त्तरि च णमुलो विधानात् कर्तृणमुला लुप्तानुक्तधर्मेवादिरियम्।

कर्मणमुला यथा—

आलोकयन्त्यो नृपतिं नञ्जेन्द्रं नलिनेक्षणाः।
पलालदर्शं पश्यन्ति साक्षादपि मनोभवम् ॥

अत्र पलालदर्शं पश्यन्तीति कर्मणमुला लुप्ताऽनुक्तधर्मेवादिरियम्।

क्विपा यथा—

श्रीवीरनञ्जराजेन्द्रं पश्यन्तीनां मृगीदृशाम्।
आग्नेयाञ्जन्ति कुसुमान्यङ्गारन्तीन्दुकान्तयः ॥

अत्राग्नेयाञ्जन्ति अङ्गारन्तीत्युभयत्रापि तद्वदाचरन्तीति 'उपमानादाचार' इत्यधिकारे 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य' इति क्विपो विधानात्, तस्य सर्वापहारिणि (सर्वप्रकारेण लोपेन?) समानधर्मस्य वाचकेवशब्दस्य च लोपात् क्विपा लुप्तानुक्तधर्मेवादिरियम्।

क्यचि णमुलि चानुक्तेवादिः, क्विप्यनुक्तधर्मेवादिरिति केचित्। ननु लुप्तप्रत्ययप्रकृतिः प्रत्ययार्थमपि ब्रूत इति न्यायेन क्विल्लोपेऽपि प्रकृतिमहिम्नै-वाचारस्य गम्यमानत्वात् सति सदृशे धर्मे कथं धर्मलुप्तेतिचेत्सत्यम्। वाच-कप्रत्ययलोपात् वाच्यलोप इत्युपचारात्। अथवा प्रकृतिलुप्तस्य धर्मे वाचिनो वालोपाद्धर्मलोप (?) इति न दोषः।

अनुक्तधर्मेवादिरुपमितसमासेन यथा—

देवराजाभिनन्द्येन वैभवेन विभूषितः।
विभाति विश्वविख्यातो नञ्जेन्द्रो राजचन्द्रमाः ॥

अत्र राजचन्द्रमा इत्युपमितसमासेन धर्मलोपात् समानधर्मलुप्तानुक्त-धर्मेवादिरियम्।

अनुक्तोपमाना वाक्यगता यथा—

नञ्जेन्द्र त्वत्कृपाणेन समः क्रूरो न दृश्यते।
स्मृतमात्रेऽपि यच्चित्तं स्तम्भयत्यरिभूभृताम्॥

अत्रोपमानस्यानुपादानादुपमानलुप्ता वाक्यगता।

समासगता यथा—

नञ्जेन्द्रसदृशो दाता न क्वापि श्रूयते जनैः।
येन विस्मारिताः कर्णमन्दारसुरधेनवः॥

नञ्जेन्द्रसदृश इति समासगतेयमुपमानलुप्ता।

अनुक्तधर्मोपमाना वाक्यगता यथा—

नञ्जक्ष्माचन्द्र तवैव कान्त्या समं न किञ्चिज्जगतीतलेऽस्मिन्।
यत्सङ्गभाजः सकलास्तटिन्यः कपर्दमैशं युगपद्विशन्ति॥

अत्र गङ्गाव्याजेन स्वयं कपर्दं प्रविशन्तीत्यर्थः। सैव समासगता यथा—

न क्वापि नञ्जक्षितिपालमौलेः वीरस्य दोर्दण्डसमानमास्ते।
अभूतपूर्वान् भुवि यत्प्रभावान् आबालगोपं मनुजाः स्तुवन्ति॥

पूर्वोदाहरणद्वये क्रूर इति दातेति शब्दाभ्यां क्रौर्यदातृत्वरूपसाधर्म्याभ्युपगमः। अनन्तरोदाहरणद्वये तु धर्मस्याप्यनुपादानम्। एषु च त्रिषूदाहरणेषु न प्रतीपालङ्कारशङ्का। उपमानस्याक्षेपाभावात् उपमेयस्याप्याधिक्य न विवक्षितम्। यत्रोपमेयाधिक्यविवक्षया उपमानत्वमुच्यते तत्र प्रतीपालङ्कारः।

अनुक्तेवादिः समासगा लुप्ता यथा—

शुभ्रांशुशुभ्रया कीर्त्या रञ्जितो नञ्जभूपतिः।
दोष्णा लालयति श्यामामवनीमचलस्तनीम्॥

इयं केवलवाचकलुप्ता—

धर्मोपमानवाचकलुप्ता यथा—

विभाति राजराजश्रीर्वीरनञ्जमहीपतिः।
यस्मै स्पृहयते देवः कलाधरकलाधरः॥

अत्र राजराजश्रीः राजराजनिष्ठश्रीरिव श्रीर्यस्य स इति 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्चे'त्यनेन उपमानवाचकधर्मलोपादुपमानवाचकधर्मलुप्ता।

वाक्यसमासगते द्विविधा श्रौतीयमार्थी तु।
तद्धितवाक्यसमासावगाहिनीति त्रिधा ज्ञेया॥

एताः केवलधर्मानुक्तौ पञ्चोपमाः कथिताः ।
आधारकर्तृकर्मक्यचाक्यङा च कर्त्तरि च ॥
कर्मणि णमुला च तथा क्विपा च धर्माद्यदर्शनतः ।
अनुक्तधर्मैवादिः स्यात् सप्तधा परिकीर्त्तिता ।
तथोपमितवृत्त्या च धर्मवार्थस्य लोपतः ॥
एका लुप्तोपमाऽनुक्तधर्मैवादिरितीरिता ।
उपमानमात्रलुप्ता वाक्यसमासावगाहिनी द्विविधा ।
धर्मोपमानलुप्ता द्विविधा प्रागुक्तमार्गेण ॥
केवलवाचकलुप्ता वाचकधर्मोपमानलुप्तेति ।
लुप्तोपमालङ्क्रियासु भेदा एकोनविंशतिः ।
पूर्णाः षष्ठोपमा एताः पञ्चविंशतिरीरिताः ॥

एकस्यैवोपमेयस्यानेकोपमानोपादाने मालिकोपमा ।

यथा—

कल्हारगुच्छन्त्यपि कुङ्कुमन्ति प्रवालहारन्ति च यावकन्ति ।
चाम्पेयमाल्यन्ति च दिग्वधूनां नञ्जक्षितीन्द्रस्य भुजप्रतापाः ॥

इयञ्चोपमा वस्तुप्रतिवस्तुभावेन बिम्बप्रतिबिम्बभावेनापि सम्भवति । एकस्यैव धर्मस्योपमानोपमेयगतत्वेन पदद्वयेनोपादानं वस्तुप्रतिवस्तुभावः । द्वयोर्धर्मयोर्भिन्नशब्देनाभिधानं बिम्बप्रतिबिम्बभावः। धर्मस्योपादानमपि द्विविधा भवति सकृन्निर्देशपृथङ्निर्देशाभ्याम् । धर्मस्य सकृदुपमानोपमेयगतत्वेन निर्देशः सकृन्निर्देशः । बिम्बप्रतिबिम्बभावाभ्यां वस्तुप्रतिवस्तुभावाभ्यां वा धर्मनिर्देशः पृथङ्निर्देशः । तत्र सकृन्निर्देशो यथा—

हिमांशुमिव नञ्जेन्द्रं भुवनोल्लासदायिनं ।
सागरा इव गम्भीराः सेवन्ते सततं जनाः ॥

अत्र भुवनोल्लासदायिनमिति गम्भीरा इति च उभयत्रापि एकदा धर्मनिर्देशात् सकृन्निर्देशः ।

द्वितीयो वस्तुप्रतिवस्तुभावेन यथा—

विद्रावितो विपक्षाणां पुञ्जो नञ्जेन्दुना भृशं ।
नितान्तं तमसां स्तोमः सूर्येणैवानुधावितः ॥

अत्रानुधावनविद्रावणात्मकतया एकस्यैवार्थस्य वाक्यद्वयेन धर्मत्वेन स्वीकारात् पृथङ्निर्देशः।

बिम्बप्रतिबिम्बभावाभ्यां यथा—

सन्त्वन्ये शशिनो वंशास्त्वया नञ्जेन्द्र दीप्यति।
बहुरत्नोऽपि जलधिः कौस्तुभेनैव हृष्यति॥

अत्र राजकौस्तुभयोः सादृश्याच्छशिवंशजलध्योरपि सादृश्यमिति बिम्बप्रतिबिम्बभावः। अत्रापि भिन्नतया निर्देशात् पृथङ्निर्देशः। पुनरपि द्वैविध्यमस्यालङ्कारस्य, समस्तवस्तुविषया एकदेश विवर्तिनी चेति।

समस्तवस्तुविषया यथा—

वंशा भूमिभुजां विभान्ति भुवने धीराः समुद्रा यथा
तत्तादृक् कलुलेकुलं च विमलं दुग्धाम्बुराशिर्यथा।
श्रीमन्नञ्जमहीमहेन्द्र स भवान् पूर्णः सुधांशुर्यथा
कीर्त्तिस्फूर्त्तिरियं तवाश्नति सिता चन्द्रातपश्रीर्यथा॥

अत्र सर्वत्रोपमानोपमेयस्वीकारात् समस्तवस्तुविषयका।

एकदेशवर्त्तिनी यथा—

नञ्जराजनियतात्मवृत्तिभिः स्वैरिणीभिरिव काङ्क्षिता द्विषाम्।
श्रीभिरन्धतमसैरिव द्विपैरप्यसौ निबिडता रणावनी॥

अत्र रणावनी सङ्केतस्थलीवेति अर्थात्प्रतीतेरेकदेशवर्त्तित्वम्। उपमायां भेदाभेदसाधारणस्य साधर्म्यस्य प्रयोजकत्वम्। एवमन्येऽप्यवान्तरभेदाः प्रेक्षावद्भिरूह्याः।

ऐक्ये ह्यनन्वयः प्रोक्त उपमानोपमेययोः।

यत्र द्वितीयसब्रह्मचारिनिषेधद्योतनायएकस्यैवोपमानोपमेयभावः प्रतिपाद्यते तत्रानन्वयालङ्कारः।

यथा—

कलुलेकुलवाराशिसम्पूर्णहिमदीधिते।
नञ्जेन्द्र भवतः कीर्त्तिस्त्वत्कीर्त्तिरिव राजते॥

'पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता।'

उपमानोपमेययोर्द्वयोः पर्यायेण प्रकारान्तरेण, तृतीयसदृशव्यवच्छेदेनेति यावत्। तदुपमानोपमेयत्वम्। तथा च तृतीयसदृशव्यवच्छेदाय द्वयोर्यदुप-

मानोपमेयत्वं सा उपमेयोपमेति फलति। अत एव पर्यायेण क्रमणेत्यर्थः, तेन क्रमेण द्वयोर्यदुपमानोपमेयत्वं सा उपमेयोपमेति लक्षणम्, तथा च निरुक्तलक्षणस्य

सकलङ्कराजमण्डलकबलनतो युगपदभ्युपैतु मिथः।
नञ्जविभोरसिरसितः सविषो राहुश्च सदृशतामुभयम्॥

इत्यत्र युगपदुपमेयोपमायामेकदेशोपमानोपमेयत्वनिर्देशेन क्रमेणेत्यंशस्याभावादव्याप्तिरिति निरस्तम्। पर्यायशब्दस्य तृतीयसदृशव्यवच्छेदपरत्वात्। उक्तोपमायां निरुक्तपर्यायसत्त्वान्नाव्याप्तिशङ्का। कस्यचित्कश्चिद्धर्ममुपजीव्य केनचित् सादृश्ये विहिते तस्यापि तेन धर्मेण तत्सादृश्यस्यार्थात् सिद्धत्वेऽपि तद्वर्णनादनयोस्तृतीयः सदृशो नास्तीति हि फलति। नचमञ्जु(ञ्जू?)कादिभिरत्र 'पर्यायः—यौगपद्याभावः, अत एवात्र वाक्यभेदः' इति वाक्य [भेद] एवोपमेयोपमोक्तेः कथं तृतीयसदृशव्यवच्छेदपरत्वमिति वाच्यम्। महाकविप्रयोगेषु यौगपद्येऽपि तस्योपलभ्यमानतया मञ्जु(ञ्जू?)काद्युक्तेरुपलक्षणपरत्वात्। यदि न तस्योपलक्षणपरत्वे किञ्चित्प्रमाणम्। तदा युगपदुपमेयोपमोदाहरणेऽपि मिथःशब्दस्यार्थपर्यालोचनया क्रमेणैव राहुखड्गयोरुपमानोपमेयत्वप्रतीतेः। मिथः सदृशतामित्यतो हि राहुसदृशता खड्गस्य खड्गसदृशता राहोश्चेति यौगपद्याभावः स्पष्टः। अतो नोक्तोदाहरणेऽव्याप्तिः। वस्तुतस्तु पर्यायेणेतिपदं न लक्षणप्रविष्टम्, वैयर्थ्यात्, स्वरूपकथनमात्रपरं तदिति द्रष्टव्यम्। न च द्वयोरुपमानोपमेयत्वरूपलक्षणमुपमालङ्कारेऽतिव्याप्तमिति वाच्यम्। उपमेयोपमायां सादृश्यस्यानुपमत्वद्योतकतृतीयसदृशव्यवच्छेदरूपोपमेयोत्कर्षफलकत्वेन कविसंरम्भगोचरतया चारुत्वापादकस्यैवाभ्युपगमात्, उपमालङ्कारे तु सादृश्यस्य सादृश्यप्रतीतिमात्रोद्देश्यककविसंरम्भगोचरतया चारुत्वापादकत्वान्नोक्तदोषः। अतएवोक्तम्—'सादृश्यप्रतीतिमात्रोद्देश्यककविसंरम्भगोचरीभूतचारुसादृश्यमुपमे'ति। वस्तुतस्तु—पर्यायेण निरुक्तार्थेन तदित्येकं लक्षणम्। द्वयोरुपमानोपमेययोस्तदित्येकं लक्षणम्। आद्यमुक्तमेव। अन्यत्तूभयप्रतियोगिकैकं सादृश्यमित्यर्थवत्। शुद्धोपमायामतिव्याप्तिवारणायोभयप्रतियोगिकेति।

मतिरिव कीर्त्तिर्विमला कीर्त्तिरिव श्रीस्त्रिलोकमहनीया।
श्रीरिव शुभदा वाणी विश्रुतचरितस्य वीरनञ्जविभोः॥

इति रशनोपमायामतिप्रसङ्गाभावायैकमित्यलं बहुना।

यथा—

औदार्यं त्वयि शौर्यवद्विजयते शौर्यं तथौदार्यवत्
वात्सल्यं सकलेषु तद्विजयवत्तच्चापि वात्सल्यवत्।
शौर्यौदार्यसमस्तमर्त्यविसरद्वात्सल्यवत् सन्ततं
प्रज्ञा तानि च तद्वदुन्नतगुणस्तोमौघ नञ्जप्रभो ॥

अत्र शौर्यादीनां परस्परसादृश्यवर्णनं तृतीयसदृशव्यवच्छेदाय। इयं चोपमेयोपमा धर्मस्य साधारण्येन वस्तुप्रतिवस्तुनिर्देशेन वा वस्तुतो भिन्नयोरपि धर्मयोरभेदातिशयोक्तिमहिम्ना एकतयाऽध्यवसितयोर्वा द्वयोरुपादानेनानुपादानेन वा सम्भवति।

तत्र द्वितीयं यथा—

निर्मलकलानुषङ्गाद्विमलीकृतसकलभुवनतलः।
चन्द्र इव नञ्जनृपतिर्नञ्जनृपतिरिव जयति जगति चन्द्रः ॥ इत्यादि

सदृशानुभूत्या वस्त्वन्तरस्मरणं स्मृतिमदलङ्कारः।

तदुक्तम्—

'सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते।' इति।

सदृशानुभूत्येति पदेन—

विषमशरविशिखदलितो वीरक्ष्मापालनन्दनो नृपतिः।
तरुणि तव विभ्रमाणां स्मरति स्मृतिमात्रदत्तकुतुकानाम् ॥

इत्यत्रानलङ्कृतौ चिन्ताजन्यस्मृतौ अतिप्रसङ्गनिरासः।

यथा—

जेतुर्नञ्जमहीपतेस्त्रिजगतीजेतुः कृपाणीलतां
वेगोत्पाटितकुञ्जरव्रजशिरःसंलीढमुक्ताफलाम्।
पश्यद्भिः प्रतिपक्षपार्थिवभटैः सङ्ग्रामलीलोद्भटा
दंष्ट्राकोटिकरालवक्त्रकुहरा काली मुहुः स्मर्यते ॥

अत्र मुक्ताफलादिसदृशवस्तुदर्शनहेतुकदंष्ट्रादिस्मृतिः। सदृशवस्तुसन्दर्शनहेतुकत्वं च सदृशवस्तुदर्शनोद्बुद्धसंस्कारजन्यत्वम्। न तु सादृश्यमूलकत्वम्। तेन

मृगयासु नञ्जनृपतिर्निबिडे विपिने ससम्भ्रमं लीनान्।
चकितानरीनिव मृगानवलोक्य स्मरति विजयसङ्ग्रामम् ॥

इत्यत्र ससम्भ्रमवनप्रवेशादिसाधारणधर्मस्य सादृश्यस्य दर्शनेन रिपूणां स्मृतिः, तया च या स्वकीयस्य विजयसङ्ग्रामस्मृतिः, तस्यां सदृशवस्तुदर्शनजन्यायां स्मृत्यात्मकभावरूपायामलङ्कारत्वाभावेऽपि न क्षतिः। इति भेदाभेदसाधारणसाधर्म्यनिबन्धना दर्शिताः।

सम्प्रत्यारोपगर्भालङ्कारप्रस्तावः। तत्रापि प्राधान्यात् प्रथमं रूपकालङ्कारो निरूप्यते।

विषयानिह्नवेनान्यस्यारोपे रूपकं मतम्।

अन्यस्याप्रकृतस्य प्रकृते विषयानपह्नुत्या यदारोपणं तद्रूपकम्। अत्राभेदस्य प्राधान्यमात्रम्। वस्तुतोऽस्त्येव भेदः। तेना[न]न्वयव्यावृत्तिः। अत्र विषयानिह्नवेनारोप इत्यनेनातिरोहितस्य विषयस्यारोप्यमाणोपरक्तत्वं विवक्षितम्। तथा च विषयातिरोधानांशेन सन्देहभ्रान्तिमदपह्नवानां व्यावृत्तिः। सन्देहालङ्कारे विषयस्य सन्दिह्यमानतया विषयतिरोधानम्। भ्रान्तिमदलङ्कारे भ्रान्त्याऽपह्नवे अपह्नवेन विषयतिरोधानम्। उपरक्तत्वमित्यनेन परिणामालङ्कारव्यवच्छेदः। अत्रारोप्यमाणस्य प्रकृतोपयोगितया विषयपरिणामरूपत्वेन प्रकृतोपरञ्जकत्वात्। उत्प्रेक्षादेरध्यवसायमूलत्वात् अस्य चारोपप्राणत्वात् सर्वेभ्यः सादृश्यमूलालङ्कारेभ्यो भिन्नमेव रूपकम्। न च निरुक्तलक्षणस्य।

ये नञ्जभूपतिमणे तव कीर्तिपुञ्जा-
श्चक्षुःप्रियङ्कररुचः परितश्चरन्ति।
एते त एव नवनीलसरोजलीला-
विस्तारिणः स्फुटसुधाकरकान्तिसारः (राः?)॥

इति कीर्तिपुञ्जेषु सुधाकरकान्तिसाराभेदापादिन्यां निदर्शनायामतिव्याप्तिरिति वाच्यम्। निदर्शनायां विषयविषयिणोर्बिम्बप्रतिबिम्बभावापन्नवस्तुवैशिष्ट्यनैयत्यसत्वेन तद्राहित्यस्य लक्षणे विवक्षितत्वात्। न चोक्तवैशिष्ट्यराहित्यमेव विशेषणमास्ताम्, न तु नैयत्यमपि तत्र निवेशनीयम्, तावतैव क्वचिदपि बिम्बप्रतिबिम्बभावशून्यरूपके केवललक्षणसद्भावान्निदर्शनायां सर्वत्र बिम्बप्रतिबिम्बभावसत्वान्न तद्वैशिष्ट्यराहित्यमिति नातिप्रसङ्ग इति वाच्यम्। सर्वत्र रूपके बिम्बप्रतिबिम्बभावेऽपि क्वाचित्के।

आलोलभमरलांछिअमंबुअमाआससरिसमङ्झाए।
वअणं विळोळतारं सादिअ णेदेइ णंजभूचंदो॥

इति बिम्बप्रतिबिम्बभावरूपके लक्षणस्याव्याप्त्यापत्तेः । न च बिम्बप्रतिबिम्बभावापन्नस्य लक्ष्यतानालिङ्गितत्वमेवेति वाच्यम् ।

'बिम्बावशिष्टे निर्दिष्टे विषये यद्यनिह्नुते ।
उपरञ्जकतामेति विषयी रूपकं तदा' ॥ [ इति ]

बिम्बप्रतिबिम्बभावस्थलेऽपि रूपकालङ्कारस्वीकारात् । नैयत्यपददाने तु तादृशस्थले क्वाचित्के बिम्बवैशिष्ट्यसत्त्वेऽपि सर्वत्र नियतत्वेन तदभावान्नाव्याप्तिशङ्का । तत्तावत्त्रिविधम्—सावयवम् । निरवयवम् । परम्परितं चेति । सावयवं च द्विविधम्—समस्तवस्तुविषयमेकदेशवर्ति चेति । निरवयमपि द्विविधम्—केवलम्, मालारूपकश्चेति । परम्परितस्यापि श्लिष्टाश्लिष्टनिबन्धनत्वेन द्वैविध्ये तयोरपि प्रत्येकं केवलमालारूपतया चातुर्विध्यम् । तदेवमष्टविधो रूपकालङ्कारः ।

अवयावयविसाकल्यवृत्ति सावयवम् । तत्र समस्तवस्तुविषयकं यथा—

नञ्जक्ष्मापः कल्पभूजस्तदीयो बाहुः शाखा तस्य तद्खड्गयष्टिः ।
तत्संलग्ना वल्लिका तत्प्ररूढा कीर्त्तिस्फूर्त्तिस्तत्प्रसूनोद्गमश्रीः ॥

अत्र नञ्जराजस्य कल्पभूजत्वं निरूप्य तदुचितावयवनिरूपणात् समस्तवस्तुविषयता । 'यदाऽऽरोप्यमाणमनेकावयवावयविभावेन स्थितं श्रुत्यैव स्थाप्यते तदा समस्तवस्तु[त्व]'मित्युक्तेः ।

एकदेशवर्त्ति यथा—

जगतामभितापहरैः कीर्त्तिज्योत्स्नारसैर्दिशः स्नपयन् ।
वीरजनाधिपजलधेर्जातो नञ्जक्ष्मापतिर्जयति ॥

अत्र कीर्त्त्यादिषु ज्योत्स्नात्वारोपश्रुत्या नञ्जक्ष्मापतौ चन्द्रत्वमर्थाच्चोपनीयत इत्येकदेशवर्त्तित्वम् । 'यदा तु किञ्चिच्छ्रुत्या किञ्चिदर्थाच्चोपनीयते तदेकदेशवर्त्ती'त्युक्तेः ।

यत्रावयवनिरूपणमात्रेण कविसंरम्भविश्रान्तिः तन्निरवयवम् । तत्र केवलं यथा—

नञ्जक्ष्मापभटा विशङ्कटभवत्क्रोधानलप्रस्फुरत्-
कालीकेसरकण्ठकन्दररवादप्यूर्जितैर्गर्जितैः ।

---

( छा ) आलोलभ्रमरलाञ्छित ( मम्बुज ) माकाशसदृशमध्यायाः । वदनं विलोलतारं आस्वाद्य नन्दति नञ्जभूचन्द्रः ।

क्रूरान् कानपि कल्पयन्ति नितरामुद्यज्जगत्सम्भ्रमान्
प्रत्यर्थिक्षितिपव्रजेषु जनितस्वान्तभ्रमान् विभ्रमान् ॥

अत्र क्रोधस्यानलत्वेन कण्ठस्य कन्दरत्वेन निरूपणं नावयवावयविभावापन्नम् ।

मालारूपेण यथा—

विस्रम्भभूमिर्विनयस्य वासः साम्राज्यलक्ष्म्याः पुनरुक्तिरिन्दोः ।
क्षात्रस्य धर्मस्य शरीरबन्धोः (न्धुः?) विराजते वीरनरेन्द्रसूनुः ॥

इदं निरवयवमालारूपकम् ।

एकस्यैवानेकधा रूपणाद्रूपकहेतुकं रूपकं परम्परितम् ।

अत्र श्लिष्टशब्दनिबन्धनं परम्परितं यथा—

आशासु नञ्जक्षितिपालमौलेर्यशःशरत्कान्तिभिरावृतासु ।
अतीव नूनं भुवनं समग्रं प्रसादमन्यादृशमाददाति ॥

अत्र यशसः शरत्कालत्वेन निरूपणं समग्रभुवनस्य सलिलत्वेन निरूपणे हेतुत्वाच्छ्लिष्टशब्दनिबन्धनपरम्परितम् । एकदा रूपणात्केवलत्वञ्च ।

तदेव माला यथा—

अश्रान्तदानोल्लसने गजेन्द्रः पुष्यत्कलासेवनपूर्णचन्द्रः ।
दुःशासनत्रासनभीमसेनो विभाति नञ्जक्षितिपालवीरः ॥

अत्र नञ्जक्षितिपाले गजेन्द्रत्वपूर्णचन्द्रत्वभीमसेनत्वनिरूपणं वितरणसलिलप्रवर्द्धमानविद्यादुष्टेषु मदसलिलत्वचान्द्रमसांशत्वदुर्योधनसोदरत्वरूपणहेतुकम्, तेषां श्लिष्टपदैर्ग्रहणात् श्लिष्टनिबन्धनत्वम् । मालारूपेण ग्रहणान्मालारूपत्वम् ।

अश्लिष्टकेवलपरम्परितं यथा—

नञ्जराज भवत्खड्गशक्रोपलशलालिका ।
कबलीकुरुते वैरिनरपालतृणव्रजम् ॥

अत्र वैरिनरपालेषु तृणत्वरूपणं खड्गे शक्रोपलशलालिकात्वरूपणहेतुकम् । इदमेव मालारूपेणानुपादानादश्लिष्टपदस्वीकारादश्लिष्टपदनिबन्धनं केवलं परम्परितम् ।

तदेव माला यथा—

रविः सुहृन्मानससारसानां चन्द्रो वधूटीनयनोत्पलानाम् ।
वह्निर्द्विषज्जीर्णदलव्रजानां नञ्जक्षितीन्द्रो नितरां विभाति ।

अत्र नञ्जक्षितीन्द्रे रवित्वचन्द्रत्ववह्नित्वरूपणं सुहृन्मानसवधूटीनयनद्विषत्सु सारसत्वोत्पलत्वजीर्णदलव्रजत्वरूपणहेतुकम् । इदमेव मालारूपेणाश्लिष्टपदैरुपादानादश्लिष्ट निबन्धनमालापरम्परितम् । इदं वैधर्म्येणापि सम्भवति । [ यथा ]

चाञ्चल्यचण्डातपवारिवाहान् दृप्यत्सरोजाकरपूर्णचन्द्रान् ।
नञ्जक्षितीन्द्रस्य यशोविलासान् गायन्ति गन्धर्वगजेन्द्रयानां ॥

एवमष्टविधस्यापि वाक्यसमासगतत्वेन षडधिकदशभेदाः सम्भवन्ति ।

आरोप्यमूर्त्या विषयः परिणामं भजेद्यदि ।
प्रकृतार्थोपयोगाय परिणामः स तु द्विधा ॥

यत्र विषयः प्रस्तुतकार्योपयोगायारोप्याकारेण परिणमति तत्र परिणामालङ्कारः । न चायं रूपकेऽन्तर्भवति । तत्रारोप्यस्य प्रकृतोपरञ्जकत्वमात्रविश्रान्तेः । इदमुदितं भवति । यत्रारोप्यमाणस्य प्रकृतोपरञ्जकत्वमात्रं तद्रूपकम् । यत्र प्रकृतोपकार्योपयोगायारोप्यात्मना विषयस्य परिणतिस्तत्र परिणाम इति । न च समासोक्तावारोप्यमाणस्य प्रकृतोपयोगित्वेन वाच्यत्वम् । अयं सामानाधिकरण्यवैयधिकरण्याभ्यां द्विविधो भवति ।

तत्र प्रथमो यथा—

नञ्जेन्द्रदुन्दुभिध्वाननवनीरदनिस्वनाः ।
दुष्टसन्तापदावाग्निं शमयन्ति समन्ततः ॥

अत्रैव ध्वानैरित्युक्तेर्द्वितीयम् । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति वा ।

यथा—

पश्यन्ति राजरथ्यायां समारूढतुरङ्गमम् ।
नञ्जेन्द्रं सुदृशः स्निग्धैः कटाक्षोत्पलदामभिः ॥

अत्रोत्पलदाम्नां कटाक्षत्वेन । परिणतिर्दर्शनक्रियोपयोगिनी । इदं समानाधिकरणम् ।

वैयधिकरण्येन यथा—

मुखश्रियं चन्द्रमयूखलक्ष्म्या निर्माय नञ्जक्षितिपालमौलेः ।
कान्ताजनानां नयनोत्पलेषु विकासमम्भोजभवस्तनोति ॥

अत्रोत्पलविकासोपादानोपयोगित्वेन चन्द्रमयूखलक्ष्म्या मुखश्रीरूपेण परिणामः । विभक्तिभेदाद्वैयधिकरण्यं च ।

'विषयो विषयी यत्र सादृश्यात्कविसम्मतात् ।
सन्देहगोचरौ स्यातां सन्देहालङ्कृतिश्च सा ॥'

शुद्धा निश्चयगर्भा सा निश्चयान्तेति च त्रिधा ।

कविसम्मतसादृश्यादियनेन स्थाणुर्वा पुरुषो वेति सन्देहव्यावृत्तिः । तत्र हि साधारणधर्मावबोधसध्रीचीनेन विवेचकधर्माग्रहणेन स्वारसिकः संशयः । किन्तु कविः स्वप्रतिभातिशयेन वर्णयितुं सादृश्यदर्शनेन सन्देहमुपनिबध्नाति । स नानवबोधनिमित्तकः । तत्राद्या यथा—

शरीरवान् पञ्चशरो नु साक्षात् मूर्त्तं नु भाग्यं धरणीरमण्याः ।
क्षात्रो नु धर्मस्तनुमानिति त्वां नञ्जेन्द्र जानाति जगत्त्रयीयम् ॥

अत्र सन्देहमात्रपर्यवसानाच्छुद्धत्वम् ।

निश्चयगर्भा यथा—

पद्मं चेन्निशि नोन्निद्रं चन्द्रश्चेन्न दिवा स्फुटः ।
इति नञ्जमहीपाल त्वन्मुखं तर्क्यते जनैः ॥

अत्र साधारणधर्मातिरिक्तविशेषणधर्मोल्लेखान्निश्चयगर्भत्वम् ।

निश्चयान्ता सा यथा—

काश्मीराः किं किं नु कङ्केलिमाला निर्णिद्राणाः शोणपद्मस्रजो वा ।
ज्ञातं ज्ञातं वीरनञ्जक्षितीन्दोर्वल्गन्त्येते बाहुजाताः प्रतापाः ॥

अत्र संशयानन्तरं निश्चयकथनान्निश्चयान्तः । सन्देहालङ्कृतिः ।

कविसम्मतसादृश्याद्विषये पिहितात्मनि ।
आरोप्यगोचरा धीश्चेत् स्याद्भ्रान्तिमदलङ्कृतिः ॥

अत्रातस्मिंस्तद्ग्रहो भ्रान्तिः । तद्वान् भ्रान्तिमान् । यथा—

नञ्जेन्द्र भवतः कीर्तिं जानन् जह्नुतनूद्भवाम् ।
शङ्कते शङ्करो मौलिं करेण मुहुरामृशन् ॥

अत्र कीर्त्तौ धावल्यरूपसादृश्यदर्शनेन गङ्गात्वभ्रान्तिः ।

अत्र कविसम्मतसादृश्यादित्यनेन चाकचाक्यादिसाम्याज्जायमानरजतादिभ्रान्तिव्यावृत्तिः । आरोप्यविषयस्यात्र भ्रान्तिगम्यत्वादेवारोपमूलसर्वालङ्कारवैलक्षण्यम् । विरोधाभावाच्च न सन्देहेऽन्तर्भावः । कविसम्मतसादृश्यमूलत्वेऽप्यारोप्यस्य तत्रोल्लेखात् न स्मरणान्तर्भावः ।

निषिद्ध्य प्रकृतं यत्राप्रकृतारोपणं भवेत् ।
तत्रापह्नुत्यलङ्कारः स त्रिधा परिकीर्त्तितः ॥

निषिध्यारोपः, आरोप्य निषेधः,छलादिशब्दप्रयोगश्चेति । क्रमेण यथा—

नैषा नक्षत्रपङ्क्तिर्नभसि विजयते किन्तु नञ्जेन्द्रबाहा-
जाग्रत्खड्गाग्रकृत्तप्रतिभटवरणारम्भसंरम्भभाजाम् ।
रम्भादिस्वर्वधूनां सरभसचरणाम्भोजविन्यासलीला-
वेलाव्यालोलवेणीगलितकतिपयोत्फुल्लमल्लीविराजिः ॥

अत्र नक्षत्रपङ्क्तौ तत्त्वं निषिद्ध्य मल्लीविराजित्वारोपः ।

क्रुध्यत्कालकरालवक्त्रकुहरो नायं तु चक्रीकृत—
श्चापस्तच्चलिताः स्फुलिङ्गनिकराः क्रूरा न चामीशराः ।
रुद्रो नञ्जविभुच्छलेन पुरतो भातीत्यरिक्ष्माभृत-
स्त्वां राजन् युधि तर्कयन्ति धनुषा वर्षन्तमुग्रानिषून् ॥

अत्र पूर्वार्धे आरोप्य निषेधः । उत्तरार्धे छलादिशब्दप्रयोगः ।

अर्थयोगरुचिश्लेषै रुल्लेखनमनेकधा ।
ग्रहीतृभेदादेकस्य स उल्लेखः सतां मतः ॥

अर्थयोगरुचिभ्यां यथा—

नञ्जनृपतेः प्रभावं कुङ्कुममिति जानते सुदृशः ।
गैरिकमिति शबरजनाः शूराः शौर्यश्रियोऽङ्गराग इति ॥

अत्रानेकधोल्लिख्यत इत्यनेन भ्रान्तिमद्व्यावृत्तिः । भ्रान्तिमत्यनेकधोल्लेखाभावात् । अनेकधोल्लेखनञ्च गृहीतृभेदेन । तेनातिशयोक्त्यपोहः । तत्र गृहीतृभेदाभावात् । न च प्रकृतेऽप्रकृतारोपरूपकेऽन्तर्भावः । तस्य प्रकृतोपरञ्जकत्वमात्रेणोत्थानात् । वस्तुनस्ताद्रूप्येण हि पुनरस्य प्रवृत्तिः ।

श्लेषेणोल्लेखो यथा—

वैरिगोत्रेषु भिदुरो विद्यासु चतुराननः ।
श्रीमत्त्वे राजराजोऽयं नञ्जभूपो विराजते ॥

अन्यत्वाध्यवसायो यः प्रकृतस्य गुणादिना ।
उत्प्रेक्षा कथिता सा स्याद्द्रव्यादिभ्यश्चतुर्विधा ॥

प्रकृतस्य गुणादिवशादप्रकृतत्वेनाध्यवसाय उत्प्रेक्षेत्यर्थः । सम्भावनमध्यवसायस्तर्क ऊह उत्प्रेक्षेति पर्यायः । गुणादीत्यादिशब्देन क्रिया विवक्षिता । तथा चायमध्यवसायो जातिगुणक्रियाद्रव्यगोचरत्वेन चतुर्धा भवन् त(ता?)मपि चतुर्धा व्यवस्थापयति । एवं च गुणक्रिययोरुत्प्रेक्षागोचरत्वेन गुणत्वेन च द्वेधाऽप्यनुप्रवेशः सम्भवति । ते[षां] च प्रत्येकं भावाभावाभिमानेन द्वैविध्ये अष्टविधा जायन्ते । उक्तं हि—

'लोकातिक्रान्तविषया भावाभावाभिमाननः ।
सम्भावना स्यादुत्प्रेक्षा वाच्येवादिभिरिष्यते ॥'

इति । ते चा (ता श्चा ?) ध्यवसायस्य गुणक्रियानिमित्तद्वैराश्ये प्रत्येकं द्विविधा भूत्वा षडधिकदश सम्पद्यन्ते । निमित्तस्य चोपादानानुपादानाभ्यां द्वैविध्ये द्वात्रिंशद्भवन्ति । हेतुस्वरूपफलोत्प्रेक्षणैः पुनरेषां त्रैविध्येषण्णवतिः अमी च वाच्योत्प्रेक्षाभेदाः । तद्वाचकास्तु—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥

इति परिगणिताः । एतच्छब्दाप्रयोगे सति गम्या । अध्यवसायमूलत्वाविशेषादुत्प्रेक्षातिशयोक्त्योः कथं भेद इति चेत् सत्यम् । विषयविषयिणोरन्यतरनिगरणेऽभिन्नत्वेन प्रतिभानमध्यवसायः, भेदतिरोधानेनाभेदप्रतिपत्तिरध्यवसायः स द्विविधः साध्यः सिद्धश्चेति । यत्र प्रकृतस्याप्रकृतधर्मसम्बन्धात्तदध्यवसायसाधनं तत्रोत्प्रेक्षा ।

तदुक्तम्—

'अप्रकृतत्वेना( अप्रकृता ? )ध्यवसायो गुणादिसम्बन्धतः साध्यः ।
प्रकृतस्य यदा कथितो( ता ? ) [ सैवो ]त्प्रेक्षा तदा तदज्ञैः ॥'

[ इति ] यत्र पुनर्गुणसम्बन्धानास्थाय प्रौढोक्तिमात्रविषयिणो विषयगतत्वेनारोपणे भिन्नस्यापि विषयनिगरणेन प्रवृत्तत्वादभेदप्रतीतेरध्यवसायः सिद्धस्तत्रातिशयोक्तिरिति विवेकः ।

तत्र चमत्कारशालिनः कियन्तो भेदा उदाह्रियन्ते । तत्र उपात्तगुणनिमित्तकजातिभावस्वरूपोत्प्रेक्षा यथा—

स्वस्थेभ्य एवाभिमतं दिशन्तं कल्पद्रुमालोक्य मुहुर्हसन्त्याः।
नञ्जप्रभो तावकदानलक्ष्म्याः स्मितप्रभावाद्विमलोऽयमिन्दुः॥

अत्र स्वच्छतरत्वरूपगुणनिमित्तेनेन्दौ स्मितप्रभाध्यवसायः। अत्र प्रभाशब्दो जातिवचनः। दानलक्ष्मीकर्तृकस्मितप्रभायाः कविप्रौढोक्तिसिद्धत्वेनालोकसिद्धान्नोपमाशङ्का। अत्रैव श्लोके नासाग्रमुक्तासुषुमा किमिन्दुरिति तुरीयपादरचनायां निमित्तत्वेन गुणक्रिययोरनुपादानादनुपात्तगुणक्रियानिमित्तकजातिभावस्वरूपोत्प्रेक्षाया इदमेवोदाहरणम्। अत्र दानलक्ष्म्या हसन्त्या इति विशेषणं स्वरूपकथनमात्रपरम्।

उपात्तक्रियानिमित्तकजातिभावस्वरूपोत्प्रेक्षा यथा—

नञ्जन्दोः समराङ्गणे समुदितैः सञ्छादितो रेणुभि-
र्मार्ताण्डोऽयमिति प्रतीपनिवहैर्निर्भिद्यमानान्तरे।
बिम्बे पूर्णसुधाकरस्य तरुणं यल्लाञ्छनं दृश्यते
तन्मन्ये जठरव्रणं शमयितुं लिप्तं नवीनाञ्जनम्॥

अत्र लाञ्छनेऽञ्जनत्वसम्पादनं निर्भेदक्रियानिमित्तमिति उपात्तक्रियानिमित्तजातिभावस्वरूपोत्प्रेक्षेयम्।

जाति[ भाव ]फलोत्प्रेक्षा जाति[ भाव ]हेतूत्प्रेक्षा यथा—

प्रकल्प्य जिष्णुत्वकृते किमुद्यत् प्रत्यर्थिभूभृद्गणपक्षभेदम्।
मित्रत्वतो नञ्जनृपस्य खड्गः प्रायो विधत्ते कमलाभिवृद्धिम्॥

अत्र जिष्णुत्वजातेर्भूभृद्गणपक्षभेदविधानक्रियाफलत्वेनोत्प्रेक्षणाज्जातिभावफलोत्प्रेक्षेयम्। अत्रैवोत्तरार्धे कमलाभिवर्धनक्रियानिमित्तत्वेन मित्रत्वरूपजातिस्वीकाराज्जातिभावहेतूत्प्रेक्षा।

यथा वा—

कल्पकीभवितुं प्रायः कलुलेनञ्जभूपतिः।
विबुधेभ्यो विनीतेभ्यो वर्षत्यमितसम्पदः॥

अत्र कल्पकत्वजातेः सम्पद्वर्षणफलत्वम्।

मण्डलाग्रेण नञ्जेन्दोराखण्डलबलश्रियः।
जलदेनेव जगतां जनितस्तापनिह्नवः॥

अत्र जलदत्वजातेस्तापनिह्नवहेतुत्वम्।

अनुपात्तनिमित्तकजात्यभावफलोत्प्रेक्षा यथा—

वदान्यभावेन समोऽपि नञ्जक्ष्मामहेन्द्रेण सुरद्रुमोऽयम् ।
अवृक्षतायै नु तपो विधत्ते जटाप्ररोहानधिकं दधानः ॥

अत्र जटाप्ररोहधारणज्ञाप्यतपोविधानफलत्वेन वृक्षत्वाभावोपपादनाज्जात्यभावफलोत्प्रेक्षेयम् ।

जात्यभावहेतूत्प्रेक्षा यथा—

अक्षत्रभावादिव दानदक्षो वृक्षश्चिरं यो वसति स्म वन्याम् ।
स एव नञ्जक्षितिपालमूर्त्तिः क्षात्रेण दानेन लसत्यवन्याम् ॥

अत्र दानदक्षस्य वृक्षस्य वन्यां निवासहेतुत्वेनाक्षत्रभावस्वीकाराज्जात्यभावहेतूत्प्रेक्षा ।

अचक्रवाकाय महीतले किं विनिर्मिताभ्यां विधिना स्तनाभ्याम् ।
लोलावलग्ना नरपालकन्या नञ्जक्षितीन्द्रं वरमर्थयन्ति ॥

अत्र स्तननिर्माणस्य चक्रवाकजात्यभावफलत्वमिति जात्यभावफलोत्प्रेक्षा ।

जात्यभावहेतूत्प्रेक्षा यथा—

वने नञ्जेन्द्रभीतानां ससंरम्भपदार्पणैः ।
अवल्मीकादिव व्यालाः कैलासे स्थाणुमाश्रिताः ॥

वल्मीकत्वजात्यभावस्य स्थाण्वाश्रयणहेतुत्वाज्जात्यभावहेतूत्प्रेक्षा ।

गुणस्वरूपोत्प्रेक्षा यथा—

रणाङ्गणे नञ्जमहीवरस्य
भुजाग्रसक्तो रणरेणुरागः ।
प्रायः प्रसीदद्विजयेन्दिरायाः
स्वैरस्तनाघातजरक्तिमश्रीः ॥

अत्र रेणुरागे रक्तिमश्रीत्वेन सम्भावनात् गुणभावस्वरूपोत्प्रेक्षा ।
यथा वा—

रणे नञ्जनृपोन्मुक्ता बाहुसाङ्कुरिताः शराः ।
धावतेति हितं वक्तुमाह्वयन्ते ननु द्विषः ॥

अत्र साङ्कुरस्याह्वानात्मनोत्प्रेक्षणात् गुणभावस्वरूपोत्प्रेक्षा ।

गुणहेतूत्प्रेक्षा यथा—

नक्तंदिवं वृद्धिमुपाश्रयन्तं
निरीक्ष्य नञ्जेन्द्रयशोहिमांशुम् ।
व्रीले(डे?)न नूनं कुसुमास्त्रजेतुः
कपर्दकान्तारगतो मृगाङ्कः ॥

अत्र कपर्दकान्तारगमनहेतुत्वेन व्रीलस्य स्वीकारात् गुणहेतूत्प्रेक्षाभावरूपा

गुणभावफलोत्प्रेक्षा यथा—

द्वेषाय किं तिग्मकरे नितान्तं
नञ्जक्षमापाल तव प्रतापः ।
तदुन्मुखीनामपि पद्मिनीनां
मुखाम्बुजास्वादमहो तनोति ॥

अत्र पद्मिनीसम्बन्धिमुखाम्बुजास्वादनं सूर्यद्वेषफलकमिति गुणभावफलोत्प्रेक्षेयम् ।

क्रियास्वरूपोत्प्रेक्षा भावरूपा यथा—

विदलितरिपुराशेर्वीरनञ्जक्षितीन्दो-
रसिरतिविमलोऽयं रक्तधारावसिक्तः ।
अभिमुखजयलक्ष्मीकण्ठकल्हारदाम
प्रतिफलति किमत्रेत्यूह्यते सर्वलोकैः ॥

अत्र रक्तधारावसेके कल्हारदामप्रतिफलनक्रियास्वरूपोत्प्रेक्षा ।

क्रियाहेतूत्प्रेक्षा यथा—

त्वत्खड्गवल्ली नञ्जेन्द्र प्रतापनवपल्लवम् ।
सूते जयेन्दिराहाससुधासेकैरिव द्रुतम् ॥

अत्र प्रतापपल्लवोत्पत्तौ सुधासेचनस्य हेतुत्वोत्प्रेक्षणात् क्रियाभावहेतूत्प्रेक्षेयम् ।

क्रियाभावफलोत्प्रेक्षा यथा—

लोकालोकनगान्तरोदिततमःसर्वस्वनिर्वासने
वैदुष्यं तु ममेति वासरमणेर्दम्भं विभेत्तुं ध्रुवम् ।
सीमक्ष्माधरसर्वभागविचरद्ध्वान्तापनोदिद्युते-
र्नञ्जक्ष्माधिपतिप्रतापमहसो धाता विधाताऽभवत् ॥

अत्र प्रतापमहोविधानस्य भेदनक्रियाफलत्वमुत्प्रेक्ष्यते ।

गुणाभावस्वरूपोत्प्रेक्षा यथा—

छिन्नेषु वैरिष्वमरौघमुक्त प्रसूनधाराप्रहृतास्ररागः ।
अलब्धलक्ष्यः क्षमापस्तकोपो विराजते नञ्जनृपेन्द्रखड्गः ॥

अत्र रक्तरागाभावस्य कोपाभावात्मना सम्भावनात् गुणाभावस्वरूपोत्प्रेक्षा ।

गुणाभावहेतूत्प्रेक्षा यथा—

प्रक्रान्ताहवकौतुकस्य कलुलेनञ्जक्षमाभृन्मणे-
र्विक्रान्तध्वजिनीपुरःप्रचलिताः क्रोधस्फुरद्बृंहिताः ।
शत्रुक्ष्मापनिवासदानसफलंमन्योन्नतत्वे गिरीन्
उच्चैरक्षमयेव दन्तमुसलैर्भिन्दन्ति दृप्तद्विपाः ॥

अत्र नञ्जक्ष्मापसेनापुरःप्रचलितदृप्तद्विपकर्तृकदन्तमुसलकरणकभेदनहेतुत्वेन गिर्यधिकरणक्ष्मापनिवासदानसफलंमन्योन्नतत्वविषयकक्षमाभावस्य कथनात् गुणाभावहेतूत्प्रेक्षा ।

गुणाभावफलोत्प्रेक्षा यथा—

जगत्यनैल्याय ननूदितानां नञ्जक्षमापालयशोभराणाम् ।
पुरः सुधांशुद्विषतां च कान्तामुखानि मालिन्यमहो सृजन्ति ॥

अत्र नञ्जक्ष्मापालयशोभरोदयफलत्वेन नैल्यसामान्याभावस्य ग्रहणात् गुणाभावफलोत्प्रेक्षा ।

क्रियाऽभावस्वरूपोत्प्रेक्षा यथा—

नञ्जक्षमाकान्तकराब्जनिर्यत् कृपाणभृङ्गालिररिद्रुमेषु ।
छिद्राणि नूनं शतशः सृजन्ती निष्क्रामयत्यन्तरनिष्ठुरत्वम् ॥

अत्र छिद्रसृष्टिस्वरूपक्रियाया अन्तरनिष्ठुरत्वक्रमणाभावात्मनोत्प्रेक्षणात्, क्रियाभावस्वरूपोत्प्रेक्षेयम् ।

क्रियाऽभावहेतूत्प्रेक्षा यथा—

संज्ञाबलप्रापितपुंस्त्वसम्पन्नित्योन्नता नञ्जनृपाहितानाम् ।
असार्थपुंस्त्वोद्वहनेन नूनं वन्या निवासं वितरन्ति वृक्षाः ॥

अत्र नञ्जराजस्याहितानां वृक्षकर्तृकनिवासवितरणे सार्थकपुंधर्मोद्वहनाभावस्य हेतुत्वेनोत्प्रेक्षणात् क्रियाऽभावहेतूत्प्रेक्षा ।

क्रियाऽभावफलोत्प्रेक्षा यथा—

कृपीडजन्मा कलुलेन्नृपालप्रतापचण्डांशुकरावलीढः ।
अन्तस्तृषोन्मेषमपाचिकीर्षुः प्रायः पिबत्यम्बुनिधीनशान्तः ॥

अत्रान्तःपिपासोन्मेषरूपक्रियाऽभावस्याम्बुनिधिपानफलत्वेनोत्प्रेक्षणात् क्रियाभावफलोत्प्रेक्षा ।

द्रव्यस्वरूपोत्प्रेक्षा यथा—

को वा विजानाति गुहाश्रिताया
मम [ प्रभावं त्वि ] ति षण्मुखस्य ।
शक्तिर्विधत्ते त्रिजगत्प्रसिद्ध-
नञ्जेन्द्रखड्गाकृतिमेव नूनम् ॥

अत्र षण्मुखशक्तेर्नञ्जेन्द्रखड्गात्मना सम्भावनात् द्रव्यस्वरूपोत्प्रेक्षा ।

द्रव्यहेतूत्प्रेक्षा यथा—

अनेन जयिना स्कन्ददेवेनेव त्वयाऽधुना ।
नञ्जेन्द्र साधु रचितं शूरपद्मावमाननम् ॥

अत्र शूरपद्मावमाननहेतुत्वेन स्कन्दस्य कथनात् द्रव्यहेतूत्प्रेक्षा ।

द्रव्यफलोत्प्रेक्षा यथा—

सुधासासा(रा ?)य महिते प्रायशो वसुधातले ।
विधाता वीरनञ्जेन्दोर्विदधे गुणसम्पदः ॥

अत्र विधानफलत्वेन सुधासारस्योत्प्रेक्षणात् द्रव्यफलोत्प्रेक्षा ।

द्रव्याभावस्वरूपोत्प्रेक्षा यथा—

विराजमाने शशिनः कुलेऽस्मिन्
नञ्जक्षितीन्द्रे निजविक्रमेण ।
विश्वं समाक्रामति दुग्धसिन्धुः
शङ्केऽधुना श्रीपतिना विमुक्तः ॥

अत्र दुग्धसिन्धौ श्रीपत्यभावस्योत्प्रेक्षणात् द्रव्याभावस्वरूपोत्प्रेक्षा ।

द्रव्याभावहेतूत्प्रेक्षा यथा—

हन्तुं हालाहलाभावात् सत्यं सुमनसां धृतिम् ।
पुनर्धात्रा कृतान् मूर्खान्निह्नुते नञ्जभूपतिः ॥

अत्र हालाहलाभावस्य पुनर्विधानहेतुत्वसम्भवात् द्रव्याभावहेतूत्प्रेक्षा ।

द्रव्याभावफलोत्प्रेक्षा यथा—

आनन्दधाराकलनप्रसङ्गे-
ष्वनिन्दवे नूनमहस्त्रियामम् ।
आमोदयत्यद्भुतशौर्यभाजा-
मग्रेसरो नञ्जनृपस्त्रिलोकीम् ॥

अत्रेन्दोरभावस्यामोदनफलत्वमिति द्रव्याभावफलोत्प्रेक्षा ।

अनेकव्यक्तिस्थले जात्युत्प्रेक्षा । एकव्यक्तिस्थले द्रव्योत्प्रेक्षेति रहस्यम् । इत्यादि यथासम्भवमूह्यम् ।

‘ विषयस्यानुपादानाद्विषय्युपनिबध्यते ।
यत्र साऽतिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता ॥’

यत्र कविप्रौढोक्त्या विषयस्य तिरोधानेन निगरणेन विषयी निबध्यते साऽतिशयोक्तिः । निगरणञ्च विषयवाचकपदप्रयोगाभावः । क्वचित् तु भूतस्य (?) तस्य कविकल्पितत्वं वा । असिद्धप्रयोग इत्युभयोरनुगतिः । यथा—

जातः सोऽभूद्विश्रुते सौम्यवंशे
पार्थः पृथ्वीमण्डलोद्दण्डशौर्यः ।
चित्तोल्लासे यस्य धर्मो महीयान्
प्राप्तो भूपेष्वाञ्जनेयध्वजं यः ॥

अत्र तच्छब्दबोधिते नञ्जराजे विषये विषयिभूतपार्थाभेदप्रतीतिनिबन्धना-न्नञ्जराजार्जुनोभयवृत्तिगुणोत्कर्षयोः फलयोरेवाभेदाध्यवसायादतिशयोक्तिः । न तु फलिनोर्विष[यविष]यिणोः ।

तदुक्तं चक्रवर्त्तिना—

अभेदाध्यवसायो हि फलेऽतिशयनामनि ।
न पुनः फलिनस्तत्र भेदे[ऽ]भेदो न सिध्यति ॥

अत्र स इति तत्शब्देन विषयोपादानेऽपि विषयितावच्छेदकरूपेण विषय-स्यानुपादानाद्विषयनिगरणं बोध्यम् । सा षड्विधा ।

अभेदे भेदकथनं भेदे सत्यभिदाभिधा ।
अयोगे योगकथनं योगे चायोगवर्णनम् ॥

कार्यकारणयोः कालस्यैक्यं तद्व्यत्यययोऽपि च ।
षड्विधाऽतिशयोक्तिर्हि सम्मता चारुचेतसाम् ॥

तत्राद्या यथा—

सन्तु सहस्रं सुदृशः सकलजनश्लाघ्यवैभवोल्लसिताः ।
नञ्जविभुलालितायाः सुतनोः सौभाग्यसम्पदन्यैव ॥

अत्र सौभाग्यसम्पदो वास्तवाभेदेऽपि भेदः कल्पितः । अत्र स्वतःसिद्ध-कविप्रौढोक्तिसिद्धसौभाग्यसम्पदोरभेदाध्यवसायः ।

भेदेऽप्यभेदकथनं यथा—

जिह्वायां न च वक्ति (क्ति ?) मा न च मतौ मन्दत्वमङ्गेऽपि वा
मालिन्यं न च लीलयाऽपि महिभृत्पादस्वयंसेवनम् ।
दृप्यत्सिंहनिनादतोऽपि न च ते भीतिस्तथाऽपि प्रभो
नित्यं श्रीनृपते नमन्नृपतते त्वं हस्तिनामग्रणीः ॥

अत्र नञ्जराजदिग्दन्तिनोरसाधारणभुवनधौरन्धर्याद्यभेदाध्यवसायः ।

अयोगे योगकथनं यथा—

विबुहा वहूहि गीदे होदो णंजेंद जसहरे जादे (दु ?) ।
सुमरेन्ति णेव्व ईसि वि अमिअं तक्कालणिस्सरन्तं वि ॥

अत्र विबुधानाममृतस्मृतियोगसत्त्वेन तदभावायोगेऽपि तत्कल्पनाद-योगेऽपि योगकथनम् ।

योगेऽप्ययोगकथनं यथा—

नञ्जक्ष्मापप्रतापज्वलदनलभरैः पच्यमाने पयोधौ
तापादप्राप्तनिद्रः सरभसमधुना तं विदूरे विमुञ्चन् ।
कान्त्या प्रान्तं विलिम्पन् कुवलयविपिनश्रीविलासं हसन्त्या
स्वच्छन्दं चन्द्रबिम्बे स्वपति नवसुधापूरिते शौरिरेषः ॥

अत्र शौरेः पयोधियोगे सत्यपि तदभावकथनात् योगेऽप्ययोगकल्पनम् ।

कार्यकारणयोरेककालापत्तिर्यथा—

यदा युधि घ्नन्ति विरोधिनो यान्
नञ्जक्ष्मापालभटाः कृपाणैः ।

---

( छा ) विबुधावधूभिर्गीते भवतो नञ्जेन्द्र यशोभरे जाते (तु ?) ।
स्मरन्ति नैव ईषदपि अमृतं तत्कालनिःसरदपि ॥

तदाऽभिविध्यन्ति हि वेणिकाभि-
स्तानेव केलीषु सुपर्वकान्ताः ॥

अत्र नञ्जराजभटकृपाणकरणकहननानन्तरभाविनोऽपि सुपर्वकान्तावेणीताडनस्य कारणसहोत्पत्तिकथनात् कार्यकारणयोरैककालिकत्वम् । अत्र कार्यशैघ्र्यस्य यौगपद्यादिरूपेणाध्यवसायः ।

कार्यकारणपौर्वापर्यव्यत्यययोर्यथा—

नञ्जक्ष्माप कुलाचलोन्नत नतक्ष्मापालरक्षाव्रत
त्वय्यायोधनरङ्गमीयुषि रुषा जृम्भत्प्रतापार्चिषि ।
बाधिर्यं पुरतोऽजनि श्रवणयोस्त्वद्विद्विषामुद्गता
पश्चादावृतदिक्तटी तव धनुर्मौर्वीनिनादाभटी ॥

अत्र कार्यभूतस्य बाधिर्यस्य प्रथममुत्पत्तिः । पश्चान्मौर्वीनिनादाभट्याः कारणभूतायाः सम्भव इति कार्यकारणयो(र्व्यत्ययः पौर्वापर्यः) ।

उक्तिसाम्यालङ्कारनिरूपणेऽतिशयोक्तिहेतुका सहोक्तिर्निरूप्यते ।

'सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः ।
कल्पितौपम्यपर्यन्ता सा सहोक्तिरितीष्यते ॥'

यत्र भेदेऽभेदरूपया कार्यकारणपौर्वापर्यविपर्ययरूपया चातिशयोक्त्या एकस्य प्राधान्येनान्वयेऽन्यस्य सहार्थेन सम्बन्धे उपमानोपमेयभावः परिकल्प्यते तत्र सहोक्तिः । प्राकरणिकाप्राकरणिकविषयत्वादुपमानोपमेयभावस्य सहार्थसम्बन्धेन द्वयोरपि प्रकृतत्वान्न तदात्मता । इयं च भेदेऽभेदातिशयोक्तिः श्लेषगर्भा च चारुत्वहेतुर्भवति । द्वयमपि यथा—

येनाभूदतिबाल्य एव विजयश्रीवेणिवल्या सह
त्रैलोक्यैकभयङ्करेऽपि समरे खड्गो दृढालम्बितः ।
साकं चन्द्रमसः श्रिया कुवलयोल्लासं विधत्ते यशः-
स्फूर्तिर्यस्य स नञ्जभूपतिमणिः पुष्णाति नः कौतुकम् ॥

अत्र खड्गालम्बनस्य विजयश्रीवेण्यालम्बनस्य च हेतुमद्भावप्राप्तस्य क्रमव्यत्ययकथनात् कार्यकारणव्यत्ययरूपातिशयोक्तिमूलका सहोक्तिः । उत्तरार्धे तु श्लेषगर्भा भेदातिशयोक्तिमूलका सहोक्तिः ।

एकस्योक्तेः प्रधानत्वेनान्यस्यस्यात्सहार्थता( तः?) ।
औपम्यं गम्यते यत्र सहोक्तिस्तत्र कथ्यते ॥ इति वा ।

यत्र उपमानोपमेयभावे विवक्षित एवैकस्य प्राधान्येन निर्देशोऽन्यस्य च समानार्थसम्बन्धादप्राधान्येनौपम्यं गम्यते तत्र सहोक्तिः। इयं भावाभावाभ्यां भवति। यथा—

नञ्जक्षितीन्द्रे शशिनः कुलेऽस्मिन् जाते दिगन्तैर्विदुषां मनोभिः।
सह प्रसीदे द्विषतां समूहैर्लिल्ये समं क्वापि जनोपसर्गैः।

अत्र भावरूपाऽभावरूपा च सहोक्तिः।

अथैतत्प्रतिकोटितया विनोक्तिर्निरूप्यते।

'विना सम्बन्धि यत्किञ्चिद्यत्रान्यस्य परापतेत्।
अरम्यता रम्यता वा सा विनोक्तिरनुस्मृता॥'

यत्र कस्यचिदसन्निधानाद्रम्यता अरम्यता वा वस्तुनः तत्र विनोक्तिः।

विनोक्तिः स्याद्विनार्थोक्तिर्या स्यादौपम्यगम्यता। इति वा।

तत्रारम्यता यथा—

अनर्घरत्नोज्ज्वलमौलिभाजामपि प्रतिष्ठा रिपुमस्तकानाम्।
कथं भवेन्नञ्जविभो तवैव पादाम्बुजस्पर्शनमन्तरेण॥

अत्र नञ्जविभुपादाम्बुजस्पर्शं विनाकृतानां तथाविधानामपि रिपुमस्तकानामरम्यतोक्ता। तेन प्रतिष्ठामिच्छद्भिर्वैरिभिर्नञ्जराज एव शरणयितव्य इति विधिः प्रकाश्यते।

यथा वा—

पुष्यन्ति न विना चन्द्रकान्त्या कैरवसम्पदः।
नञ्जेन्द्र तव कीर्त्या च विना कवयतां गिरः॥

अत्र नञ्जराजकीर्तिकविगीर्षु इन्दुचन्द्रिकाकुमुदसम्पद्भिः सह गम्यौपम्ययुक्ता विनोक्तिः।

किञ्चिद्विना रम्यता यथा—

नवनीतमृदुलहृदये नञ्जविभौ लसति सन्ततोदग्रे।
उच्चैरपि कनकगिरिः स्तूयेत विनैव कठिनभावेन॥

अत्र कठिनभावेन विना कनकगिरे रम्यतोक्ता।

उक्तिसाम्यात्समासोक्तिं लक्षयति।

'विशेषणानां तौल्येन यत्र प्रस्तुतवर्त्तिनाम् ।
अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरुच्यते ॥'

विशेषणविशेष्याभ्यामर्थान्तरप्रतीतेर्न श्लेषता । ननु समासोक्तावप्रकृतारोपणस्य गम्यत्वात् गम्यरूपकसाङ्कर्यशङ्का दुर्निवारेति चेन्नैवम् । प्रस्तुतोपरञ्जकत्वमात्रादप्रस्तुतस्य । न च परिणामान्तर्भावः । आरोपविषयस्यारोप्यमाणरूपतया परिणामे आरोप्यमाणप्राधान्येनारोपविषयतिरोधानं हि परिणामालङ्कारप्रयोजकम् । आरोप्यमाणवस्तुना सादृश्यवैशिष्टयप्रतिभामात्रेण आरोप्यगम्यतानुपमर्दादारोपविषयस्यैव प्राधान्येन प्रतिपत्तिः समासोक्तिप्रयोजिकेति रहस्यम् । श्लिष्टविशेषणसाम्यात् साधारण्यादौपम्यगम्यतया चेति त्रिविधा । तत्राद्या यथा ।

स्निग्धामुन्मुक्तशोभामनवरतममित्रावलोकप्रसङ्गात्
कान्तिप्राग्भारचञ्चन्मघवमणिलसन्मेखलालङ्कृताङ्गीम् ।
उद्दामोद्यन्नितम्बामवधिगिरिशिलाचक्रपाश्चात्यसीमा-
मुल्लास्यातीव रक्तो विलसति तरुणो नञ्जराजप्रभावः ॥

यथा वा—'कस्मात्केवलकैतवै'रित्यादि[ ९–प. ]अत्र स्निग्धेत्यादिविशेषणमहिम्ना पूर्वश्लोकेअवधिगिरिशिलाचक्रपाश्चात्यसीमनि अनन्तरश्लोके साहित्यां च नायिकात्वप्रतीतिः ।

साधारणविशेषणेन यथा—

नञ्जक्षितीन्द्रभटहस्तलसत्कृपाण-
धारा विलोलमनसामवनीपतीनाम् ।
संस्तम्भयन्ति हृदयानि विवर्णयन्ति
गात्राणि नेत्रयुगलीमपि घूर्णयन्ति ॥

अत्र प्रस्तुतस्य भयानकरसस्य अप्रस्तुतस्य शृङ्गाररसस्य च साधारणीभूतगात्रस्तम्भनादिविशेषणवलात् कृपाणधारासु अवनीपतिषु च नायिकानायकभावप्रतीतिः ।

औपम्यगर्भता यथा—

सोल्लासस्तनचक्रवाकमहिताः सञ्चारिमीनेक्षणा
वीचीबाहुविराजिताश्च पुलिनश्रोणीभरोल्लासिताः ।

कन्या भूमिभृतां सफेनहसितोद्वेल्लत्तरङ्गाधरा
नञ्जेन्द्रं गुणरत्नजालवसतिं पश्यन्ति हृष्यन्ति च ॥

अत्र चक्रवाकाविव स्तनावित्याद्युपमानगर्भत्वेन प्रकृते समासे पश्चात् स्तनसदृशैश्चक्रवाकैरिति च समासान्तराश्रयतया समानविशेषणमाहात्म्यात् कन्यासु नदीत्वप्रतीतिः, नञ्जेन्द्रे रत्नाकरत्वप्रतीतिश्चेति औपम्यगर्भत्वम् । समासोक्तौ सर्वत्र व्यवहारसमारोप एव जीवितम् । स चतुर्विधः [ लौकिके वस्तुनि ] लौकिकव्यवहारसमारोपः, लौकिके वस्तुनि शास्त्रीयव्यवहारसमारोपः, शास्त्रीयवस्तुनि शास्त्रीयव्यवहारसमारोपः, शास्त्रीयवस्तुनि लौकिकव्यवहारसमारोपः । तत्रादिः उदाहृतश्लोकत्रये दर्शितः ।

शास्त्रीयवस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपो यथा—

रसं स्थिरीकर्त्तुमतिप्रगल्भा
विज्ञातधातुप्रभृतिप्रचाराः ।
समस्तलेह्योचितपाकभेदान्
जानन्ति नञ्जक्षितिभृत्कवीन्द्राः ॥

अत्रालङ्कारशास्त्रीयवस्तुनि वैद्यशास्त्रीयवस्तुसमारोपः

लौकिके वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपो यथा—

अर्धेन्दुरेखयैव प्रकटितसंयोगविवृतगुरुभावा ।
बहुशुद्धवर्णवृत्तस्तोमं सूतेऽत्र नञ्जनृपकीर्त्तिः ॥

अत्र अर्धेन्दुरेखयैव-अर्धचन्द्ररेखयैव प्रकटितसंयोगतया-प्रकटितसम्बन्धतया प्रकाशितसहवासतयेति यावत् । विवृतगुरुभावा—प्रकटितगौरवा बहुशुद्धवर्णानामधिकस्वच्छकान्तीनां यानि वृत्तानि वर्त्तनानि तेषां स्तोमं सूते । सर्वत्र स्वच्छकान्ति सम्पादयतीत्यर्थः । इदं च लौकिकवस्तु । अत्रैव अर्धेन्दुरेखयैव—अर्धचन्द्रसदृशरेखयैव प्रकटितः संयोगः—संयुक्तवर्णो यस्य स प्रकटितसंयोगः । तस्मिन् विवृतगुरुभावा-प्रकाशितगुरुत्वा । अर्धचन्द्राकाररेखालेखनेनैव संयुक्तपरके वर्णे गुरुत्वं प्रकटनीयमिति छन्दःशास्त्रेऽनुशासननियमः । बहुशुद्धवर्णवृत्तस्तोमं—बहूनि अनेकानि शुद्धानि असङ्कीर्णानि वर्णवृत्तानि अक्षरवृत्तानि तेषां स्तोमं सूते । इति छन्दःशास्त्रीयवस्तुव्यवहारसमारोपः ।

शास्त्रीयवस्तुनि लौकिकव्यवहारसमारोपो यथा—

अपूर्वसुप्रत्ययमुद्वहन्त्या पुंभावकृत्येत्वमपि प्रकृत्या।
विराजिते मागधि वर्णयस्व श्रीनञ्जराजं कविलोकभोजम्॥

पुंभावकृत्यत्वं—पुंभावः पुंस्त्वं तस्य कृतिः कारणं विधिरिति यावत् तस्मिन्नेत्वं यस्य तम्। अपूर्वसुप्रत्ययम्—अपूर्वः अकारपूर्वः सुप्रत्ययः प्रथमाविभक्त्येकवचनम्। तमुद्वहन्त्या प्रकृत्या प्रातिपदिकेन विराजिते। मागधि मगधदेशभाषे श्रीनञ्जराजं वर्णयस्वेति। अत्र प्राकृतव्याकरणशास्त्रीयं वस्तु मागध्यां 'सौ पुंस्येलत' इति सूत्रोक्तिः। पुंभावकृत्ये पुरुषायितरूपे कार्ये अपूर्वसुप्रत्ययं अपूर्वज्ञानं आश्रयन्त्या प्रकृत्या स्वभावेन विराजिते मागधीत्यर्थश्चेति शास्त्रीयवस्तुनि लौकिकव्यवहारसमारोपः।

उक्तिसाम्येऽपि श्लेषगर्भत्वविशेषाद्वक्रोक्तिरुच्यते।
'अन्यथोक्तस्य वाक्यस्य काका श्लेषेण वा भवेत्।
अन्यथा योजनं यत्र सा वक्रोक्तिरितीष्यते॥'

यत्र कयाचिद्विवक्षया केनचित्प्रयुक्तस्य वाक्यस्यान्येनान्यथा विवक्षया योजना क्रियते सा वक्रोक्तिः।

तत्र काका यथा—

उप (?) रअणाअररसणा वसुमदिआ रमइ सुगुणमहुरंमि।
णंजेन्दम्मि वि होदी ताए अहिआ ण सहि मुहा भमसि॥

अत्र कयाचिन्मूर्खया नायिकां प्रति—"भवत्यपि वसुमत्या अधिका न। मुधा भ्रमसि"इति विवक्षया प्रयुक्ते वाक्ये ऽन्यया समर्थया—'त्वमपि अधिका न?। अधिकैव। तन्मुधा भ्रमसि। त्वय्येव नञ्जराजः प्रीतिं तनुत इत्यर्थसमर्थनात् काकुसहिता वक्रोक्तिरियम्। श्लेषेण यथा—

सद्वृत्त, स्तनमण्डलं तव, मधूदाराकृते, तेऽधरः,
सान्द्रस्नेहनिबद्ध, पङ्कजमुखि प्रायो भवद्वेणिका।
औदार्यादतिलङ्घ्यकर्ण, नयने कान्ते तवे, त्युक्तिभि-
र्नित्यं स्त्रीषु चमत्क्रिया विदधते नञ्जेन्द्रसख्यान्नृपाः।

अत्र वृत्तमधुस्नेहौदार्यकर्णशब्दानां चरित्रवसन्तप्रेमौ[दार्य]राधेयपरत्व-

(छा) पदय (?) रत्नाकररशना वसुमती रमते सुगुणमधुरे। नञ्जेन्द्रेऽपि भवती तस्य अधिका न सखि मुधा भ्रमसि।

विवक्षया प्रयुक्तानां नायिकयोदितानां वृत्ताकारवसन्ततैलमहत्त्वादिपरत्वेन नायकेनान्यथा समर्थनाच्छ्लेषपूर्विका वक्रोक्तिरियम् ।

उक्तिसाम्यात्स्वभावोक्तिर्निरूप्यते ।

'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ।'

स्वेदार्द्राकुलमाकुलाकुलकचं निःश्वासवलात्कुच-
स्रस्तारण्यतरुप्रकाण्डविटपासक्तापकृष्टांशुकम् ।
नञ्जक्ष्माप भवद्विरोधिसुदृशो धावन्ति कान्तैः समं
शैलेष्वापतदुत्पतज्जनकरैरादर्शिताध्वक्रमाः ॥

अज्ञातभाषाणां मार्गप्रदर्शनक्रमो हस्तेनैवेति । स्पष्टमन्यत् ।

उक्तिसाम्याद्व्याजोक्तिर्निरूप्यते ।

यत्नेन संवृतं वस्तु कुतश्चिद्विवृतं यदि ।
निगूह्यतेऽन्यविधया व्याजोक्तिस्तत्र कथ्यते ॥

यत्र विवृतं प्रकाशितं वस्तु अन्यविधया केनचिद्व्याजेन निगूह्यते प्रच्छाद्यते सा व्याजोक्तिः । यथा—

आदर्शसद्मनि सखीजनवर्ण्यमाने
नञ्जप्रभौ सहसिता नरपालकन्या ।
ह्रीणा च मातरमपृच्छदये ममेयं
नासामणिः किरति कान्तिमुपान्तभागे ॥

अत्र ह्रीणा हृदयगतनञ्जराजासक्तिसूचकशृंगारचेष्टात्मकहसितमेव नासामणिकान्तिप्रसरणव्याजेन निगूह्यते ।

नन्वपह्नवालाङ्करादस्याः कथं भेद इति चेदुच्यते । अपह्नवे हि प्रकृतस्याप्रकृतसादृश्यलक्षणफलकटाक्षेण प्रकृतमपलाप्याप्रकृतमारोप्यते । इह तु सिद्धमेव सादृश्यं साधनतयाऽवलम्ब्य निह्नवः क्रियते । तेनोभयोरपह्नवपूर्वकत्वाविशेषेऽपि सादृश्यस्य फलत्वसाधनत्वाभ्यां भेदः । यद्वाऽपह्नुतौ वचनस्यान्यथानयनेनापह्नवः । अस्यां त्वाकारहेत्वन्तरवर्णनेन गोपनमिति तयोर्भेदः । व्याजोक्तिरित्यत्रोक्तिग्रहणमाकारगोपनार्थकहेत्वन्तरप्रत्यायकव्यापारमात्रोपलक्षकम् । तेन प्रणामादिचेष्टादिभिरप्याकारगोपनं व्याजोक्तिरिति मन्तव्यम् ।

'मीलनं वस्तुनैकेन वस्त्वन्तरनिगूहनम्'

यत्रैकेन वस्तुना वस्त्वन्तरं प्रच्छादितं भवति स मीलनालङ्कारः । स द्विविधः । सहजेनागन्तुकतिरोधानम् । आगन्तुकेन सहजतिरोधानं चेति ।

तत्र प्रथमं यथा—

कर्णावतंसनवनीलसरोजलक्ष्मी-
माच्छादयद्भिरधिकं ललितैः कटाक्षैः ।
आक्रान्तमात्मनि गतं मुहुरुत्किरन्ती
कान्ता विलोकयति काचन नञ्जभूपम् ॥

अत्र सहजेन कटाक्षरूपवस्तुनाऽऽगन्तुककर्णावतंसनीलोत्पलश्रीरूपवस्तुनो निगूहनम् ।

द्वितीयं यथा—

विलासवीथीजुषि नञ्जभूपे विलोकितेऽभून्नगराङ्गनानाम् ।
कन्दर्पभीतिर्नितरां गुरूणामालोकजन्यं भयमावरीतुम् ॥

अत्रागन्तुकनञ्जराजदर्शनप्रयुक्ता कन्दर्पभीतिः सहजां गुरुजनदर्शनप्रयुक्तभीतिमावरीतुमभूदित्यागन्तुकेन सहजतिरोधानम् ।

'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता ।'

यत्रैकस्य वस्तुनो गुणसाम्येन वस्त्वन्तरतादात्म्यप्रतीतिस्तत्र सामान्यालङ्कारः । अत्र गुणसाम्येत्यनेन मीलनव्यावृत्तिः । न हि मीलने गुणतः परेण तिरोधानम् । अपि तु वस्तुना वस्त्वन्तराच्छादनमात्रं, न चापह्नवेऽन्तर्भावः । अत एव सामान्यपदप्रवृत्तिः ।

यथा—

नञ्जक्ष्मापशरौघपूरितवपुर्निष्यन्दमानासृजः ।
प्रत्युर्वीशगजान् पलाय्य समरादस्ताद्रिमारोहतः ।
तत्रत्यानपि सान्द्रसान्ध्यकिरणोत्कीर्णान् पयोदव्रजान्
यत्नादप्यधिकात् पृथग्गणयितुं शक्नोति को वा जनः ॥

अत्रारुण्यमिश्रितनीलरूपसाम्यादुभयोरैक्यप्रतीतेर्न कस्यापि पृथग्ग्रहणचातुर्यम् ।

इतरगुणसंविधानातिशयसाम्यात्तद्गुण उच्यते ।

'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणोदयः (णाहृतिः ?) ।

यत्र नूनं स्वगुणं विहाय सन्निहितवस्तुनः सकाशादुत्कृष्टगुणः स्वीक्रियते स तद्गुणालङ्कारः । स्वगुणहानेन तस्य—परस्य गुणः अत्रेति तद्गुणपदप्रवृत्तिः । अयमिह विवेकः । यत्र समानगुणसम्बन्धे सत्येवान्यस्यान्याच्छादकत्वं तत्र सामान्यालङ्कारः । यत्र गुणवैसादृश्ये सत्येव दुर्बलनिजगुणहानेन सन्निधिमहिम्ना प्रोज्ज्वलगुणस्वीकारस्तत्र तद्गुणालङ्कारः । यत्र गुणोपादानाद्यविवक्षया वस्तुनो वस्त्वन्तरेणाच्छादनं तत्र मीलनालङ्कारः । यत्र सादृश्येन कस्यचिदपलापस्तत्रापह्नव इति ।

यथा—

प्रतापयोगात्कलुलेनरेन्दोः प्रालेयशैलं नवकुङ्कुमाभम् ।
जयेशचापेति जनान् स्तुवानान् हरो हसत्यद्य सहस्ततालम् ॥

अत्र कृतिनायकप्रतापारुण्यबन्धेनारुणीकृतं प्रालेयशैलं ईशचापो मेरुरिति स्तुवानान् हसतीत्यनेन प्रालेयशैलेन स्वीयधवलगुणः परित्यज्यत इति तद्गुणालङ्कारः । तत्प्रातिभट्याद्तद्गुणो निरूप्यते ।

सति हेतौ परगुणास्वीकारःस्याद्तद्गुणः ।

यत्र सन्निधानहेतौ सत्यपि परगुणाग्रहणं तत्र अतद्गुणालङ्कारः । यथा—

सुमेरुरूप्याचलनीलशैलैरुद्दामशोभाकवलीकृताशैः ।
आलिङ्गिताऽप्यद्य नरेन्द्रमौलेर्नञ्जप्रभोः कीर्तिरनुज्झितश्रीः ॥

अत्र सुमेर्वादिकान्तिसंवलनेऽपि कीर्त्तेः स्वगुणापरित्यागकथनादतद्गुणत्वम् ।

अतद्गुणेन किञ्चित्प्रक्रान्तत्वाद्विरोधस्य विरोधाभासालङ्कारो निरूप्यते ।

'आभासत्वे विरोधस्य विरोधालङ्कृतिर्भवेत् ।'

यत्राभासतः प्रतीतो विरोधः पर्यवसाने परिहीयते तत्रविरोधाभासालङ्कारः । पर्यवसानेऽपि यदि विरोधस्तथैवावतिष्ठते तदा दोष एव । तत्र जातिक्रियागुणद्रव्यैश्चत्वारो विरोधाभासभेदाः । जातेर्जात्यादिना विरोधे चत्वारो भेदाः । क्रियायाः क्रियागुणद्रव्यैः सह त्रयो भेदाः । गुणस्य गुणद्र-

व्याभ्यां सह विरोधे द्वौ भेदौ। द्रव्यस्य द्रव्येण सह विरोधे एको भेदः। इत्थं दशविधा विरोधाभासाः।

तत्र—जातेर्जात्या सह जातेः क्रियया च विरोधो यथा—

नक्षत्रक्षमापालविरोधिभूपाः महाविषादा अपि युध्यनीशाः।
ताम्यन्त्यखड्गा अपि गण्डकेषु स्फुटस्फुरन्मांसलभावभाजः॥

महाविषं कालकूटं तमदन्तीति तथोक्ताः। महान् विषादो येषां ते। इत्यर्थश्च। अनीशा ईशभिन्नाः। असमर्थाश्च। तथाच महाविषादत्वानीशत्वजात्योरेकत्रविरोधापाततो विरोधस्फूर्तिः। खेदयुक्ताअसमर्थाश्चेति विरोधपरिहारः। ततश्च पूर्वार्धे जात्योर्विरोधः। उत्तरार्धे तु अखड्गाः खड्गमृगभिन्नाः। गण्डकेषु खड्गमृगेषु स्फुटं स्फुरन् व्यक्तं प्रकाशमानः मांसलः अधिकःभावः अभिप्रायः तं भजन्तीति तथोक्ताः। अन्यत्र अखड्गाः कृपाणरहिताः। गण्डकेषु गण्डस्थलेषु स्फुटस्फुरन्मांसलभावः उच्छूनता। तं भजन्तीति तथोक्ताः। अत्र प्राथमिकार्थमादाय अखड्गत्वजातेः स्फुटस्फुरन्मांसलभावभजनरूपक्रियायाश्च विरोधः। द्वितीयार्थमादाय विरोधपरिहारः। अतः श्लेषमूलोऽयं विरोधः। उत्तरत्रैवमेवोह्यम्।

गुणद्रव्याभ्यां जातेश्च विरोधो यथा—

सुप्रतीकोऽप्यमलिनो वीरनक्षत्रमहीपतिः।
प्राणोऽपि जगतां नित्यं प्रचेता भुवि राजते॥

अत्र जगतां प्राणः प्रचेताः वरुणः, जगदावश्यकः प्रकृष्टमनाश्च। सुप्रतीकः-दिग्गजः, शोभनावयवश्च। अत्र सुप्रतीकत्वजातेर्नैर्मल्यात्मकगुणस्य च विरोधः। जगत्प्राणत्वरूपजातेः प्रचेतोरूपद्रव्यस्य च विरोधः। अत्रापि श्लेषमूलः।

क्रियायाः क्रियया विरोधो यथा—

नक्षत्रेन्द्र भवतः सौम्यवंशजाऽपि धनुर्लता।
इयं न सहते राजमण्डलस्योत्पथस्थितिम्॥

सौम्यवंशजा-बुधवंशजा राजमण्डलस्य-चन्द्रमण्डलस्य उत्पथस्थितिम्। अन्यत्र सौम्येति सम्बुद्धिः। वंशजा-वेणुजा। राजमण्डलस्य नृपसमूहस्य उत्पथस्थितिं न सहत इति। अत्र सौम्यवंशजननरूपक्रियाया राजमण्डलस्थित्यसहनरूपक्रियायाश्च विरोधः।

गुणक्रियाभ्यां विरोधो यथा—

अपि सर्वत्र सस्नेहः खड्गो नञ्जमहीपतेः ।
मुखेनैव परोन्मेषं पराकर्त्तुं प्रतीक्षते ॥

सस्नेहः-प्रेमयुक्तः तैलयुक्तश्च, परोन्मेषं-अन्यजनोन्मेषं शत्रुजनोन्मेषश्च । तथा चात्र स्नेहरूपगुणस्य प्रतीक्षणरूपक्रियायाश्च विरोधः ।

गुणद्रव्याभ्यां विरोधो यथा—

मेघनादोऽपि नञ्जेन्द्र तव सङ्ग्रामदुन्दुभिः ।
धत्ते धावद्द्विषन्नागकुम्भकर्णव्यथाभरः (रम् ?) ॥

अत्र मेघस्य नाद इव नादो यस्य स मेघनादः इन्द्रजिच्च । धावन्तो द्विषन्नागाः शत्रुश्रेष्ठा यस्मात् स चासौ कुम्भकर्णश्च तस्य व्यथाभरः । अन्यत्र धावद्द्विषतां ये नागाः तेषां कुम्भसदृशकर्णव्यथाभर इत्यर्थश्च । अत्र एकेनेन्द्रजिता द्रव्येण सह कुम्भकर्णव्यथाधानरूपक्रियायाश्च विरोधः । अत्रापि श्लेषमूलत्वेन ।

गुणस्य गुणेन सह विरोधो यथा—

वितीर्णमन्मथमते वपुषा नञ्जभूपते ।
श्यामाऽपि रक्ता तन्वङ्गी श्लाघते भवते सदा ॥

अत्र श्यामा–नीला रक्ता–अरुणा, युवतिः अनुरागयुक्ता च । ततश्च श्यामरक्तत्वरूपगुणयोर्विरोधः ।

गुणद्रव्याभ्यां विरोधो यथा—

विभाति वीरनञ्जेन्दोरनञ्जनयशस्करः ।
उग्रसेनोपरि द्वेषी खड्गः कृष्णोऽपि सर्वदा ॥

अत्र उग्रसेनो नाम राजा, तदुपरि द्वेषी । उग्रसेनाः शत्रुसेनाः, तदुपरि द्वेषी । कृष्णः–नीलवर्णः, बलरामानुजश्च । तथाचैकेन कृष्णेन द्रव्येण सह द्वेषस्य गुणस्य विरोधः ।

द्रव्यस्य द्रव्येण सह विरोधो यथा—

सिंहसंहननो राजन् अग्रगण्योऽपि दानिनाम् ।
राजमौलिश्च नञ्जेन्द्र क्षमाभर्त्ता भुजे भवान् ॥

अत्र सिंहस्य संहननं शरीरम् । तद्वान् सिंहसंहननः । उत्कृष्टाङ्ग इत्य-

र्थश्च। 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः।' इति कोशोक्तिः। दानिनां गजानां दातॄणां च अग्रगण्यः ऐरावतः श्रेष्ठश्च। राजमौलिश्चन्द्रचूडः राजश्रेष्ठश्च। भुजे क्षमाभर्त्ता विष्णुः धुरन्धरश्च। अत्र सिंहसंहननस्य द्रव्यस्याग्रगण्यस्य च राजमौलेः क्षमाभर्त्तुश्च विरोधः। इत्येवं दशविधा विरोधाभासाः।

अयं श्लेषेणापि सम्भवति। यथा—

विभो नञ्जक्ष्माप प्रणतजनरक्षानिपुण यो
भवान् मित्रानन्दप्रकटनविधौ शीतलगुणः।
स एवायं चेतोनिरवधिकसन्तापजनने
शरत्कालः कालः समजनि तवारिक्षितिभृताम्॥

अत्र यः शीतलगुणः स एव कालो जात इति विरोधः।

अथ विरोधगर्भालङ्कारा निरूप्यन्ते।

'आधाररहिताधेयमेकश्चानेकगोचरम्।
अशक्यवस्तुकरणं विशेषालङ्कृतिस्त्रिधा॥'

यत्र प्रसिद्धाधारमन्तरेणाधेयं निबध्यते स एको विशेषः, एकस्यानेकगोचरत्वे द्वितीयो विशेषः, किञ्चिदारभ्याशक्यवस्त्वन्तरकरणे तृतीयो विशेषः।

तत्र प्रथमं यथा—

रामचन्द्रे हरिश्चन्द्रे चलितेऽपि तदाश्रितम्।
यत्सत्यभाषणं तत्तु त्वयि नञ्जेन्द्र दृश्यते॥

अत्र रामचन्द्रहरिश्चन्द्रयोः प्रसिद्धाधिकरणयोरभावेऽपि तदाधेयस्य सत्यभाषणस्य नञ्जेन्द्रे कथनादयमेको विशेषः।

द्वितीयो यथा—

पार्श्वद्वयेऽपि पुरतः परतो बहिर्वा
चित्तेऽपि नञ्जनरपालकमीक्षमाणा।
कन्या कपोलविलसत्पुलकाङ्कुरश्रीः
काचिन्निशां नयति कामशराभितप्ता॥

अत्र एकस्यैव नञ्जराजस्य सर्वदिक्षु गोचरत्वेन कथनात् द्वितीयो विशेषः।

तृतीयो यथा—

नञ्जक्ष्मापाल तव प्रतापं यशश्च धाता भुवि निर्मिमाणः।
अस्तस्थितिं नैव गतौ कदापि प्रभाकरेन्दू सृजति स्म नव्यौ॥

अत्र धातुः प्रतापकीर्त्ती स्रष्टुमारभमाणस्य नव्यसूर्य[चन्द्र]सृष्टिकथनात् तृतीयो विशेषः ।

अथ आधाराधेये वैचित्र्यादधिकालङ्कारो निरूप्यते ।

'आधाराधेययोरानुरूप्याभावोऽधिको मतः ।'

यत्राश्रयाश्रयिणोरानुरूप्यं नास्ति सोऽधिकोऽलङ्कारः । स द्विविधः । आश्रयस्याल्पत्वमहत्त्वाभ्याम् ।

तत्र प्रथमं यथा—

सप्तान्तरीपमहितामवनीं सलीलं
दंष्ट्र[ा]ञ्चलेन वहति स्म य एव देवः ।
तेनापि वोढुमधुना नियतं न शक्या
नञ्जक्षितीन्द्र जनरञ्जनचातुरी ते

अत्र लीलयाऽखण्डमहीमण्डलधारिणोऽपि देवस्य नञ्जक्षितीन्द्रजनरञ्जनचातुरीभरणस्याशक्यत्वकथनादाधेयस्याधिक्यम् ।

आधाराधिक्यं यथा—

सर्वस्यापि चराचरस्य वसतिं लोकत्रयं पद्मगा-
दब्जाक्षश्चरणैस्त्रिभिः स च रणे येनैव बाणीकृतः ।
सोऽपि प्रेक्षणकोणमात्रजनितोद्वेल्लदयासागरो
देवो नञ्जमहेन्द्रमानससरोजातस्य भृङ्गायते ॥

तादृशस्यापि देवस्य भृङ्गायमाणत्वकथनात् नञ्जेन्द्रहृत्पद्मस्याधिक्यम् ।

कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना ।
सति कारणपौष्कल्ये विशेषोक्तिः फलं न चेत् ॥

यत्र प्रसिद्धकारणपरित्यागेन कार्यस्योत्पत्तिर्निगद्यते सा विभावना । यत्र कारणसाकल्येऽपि फलस्यानुत्पत्तिः सा विशेषोक्तिः ।

यथा—

श्रुते नञ्जक्ष्मापे श्रवणभयदोर्दण्डचलिते
विना वह्निस्पर्शादपि रिपुमहीपालललनाः ।
असूर्यंपश्या अप्यधिकतरसन्तापभरिता
भवन्त्यासामस्मादपि न हृदये जीवनरुचिः ॥

अत्र रिपुमहीपाललल्लनानां वह्निसूर्ययोः सन्तापकरगत्वेन प्रसिद्धयोः संस्पर्शाभावेऽपि सन्तापकथनाद्विभावना। अत्रैव आसां स्त्रीणां अस्मादपि-सन्तापभरणादपि हृदये जीवनरुचिर्नेत्यनेन सन्तापभरणस्य सलिलेच्छाजनकत्वेन प्रसिद्धस्य सत्त्वेऽपि जीवनपदश्लेषप्रतिभोल्लासितसलिलरुचेरजननाद्विशेषोक्तिश्च।

कार्यकारणविरोधप्रस्तावादसङ्गतिरुच्यते।

असङ्गतिर्हेतुफले भिन्नाधिकरणे यदि।

यत्रैकदेशवर्त्तिनोरपि हेतुफलयोर्भिन्नदेशस्थितिर्निबध्यते तत्रासङ्गत्यलङ्कारः। न च विरोधान्तर्भावः शङ्क्यः। सामानाधिकरण्ये विरोधः।

वैयधिकरण्ये त्वसङ्गतिरिति व्यवस्थितेः।

यथा—

नञ्जेन्द्र भवता खड्गो मोचितः कोशबन्धनात्।
द्विषद्वधूटीधम्मिल्लैर्विप्रकीर्णं समन्ततः॥

अत्र खड्गस्य बन्धनान्मोचनं धम्मिल्लविप्रकीर्णतेति हेतुफलयोर्वैयधिकरण्यस्थितेरसङ्गतिरियम्।

विरोधप्रस्तावाद्विचित्रं निरूप्यते।

'विचित्रं स्याद्विरुद्धस्य फलस्याप्त्यै समुद्यमः।'

यत्र विरुद्धफलप्राप्तये समुद्योगस्तत्र विचित्रालङ्कारः।

यथा—

नञ्जेन्द्र नयनश्राणामाशां वर्धयितुं त्वया।
आशामुखे द्विषां दत्ताः स्वसेनापदधूलयः॥

आशां वर्धयितुं आशामुखे सेनाचरणरजसां दानमिति विरुद्धफलाय समुद्योगकथनाद्विविचित्रालङ्कारः।

अथान्योन्यस्य विरोधमूलत्वादन्योन्यं निरूप्यते।

'तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्।'

यत्र परस्परं क्रियाद्वारकमुत्पाद्योत्पादकत्वं तत्रान्योन्यम्। यथा—

गुणा भूषायन्ते सहजमधुरा नञ्जनृपतेः
कृतेरस्या एते त्रिजगति धुरिणा अपि तया।

ततः सैषा भूयः स्रगिव नवसौरभ्यभरिता
कवीनामानन्दं जनयतु जगद्रञ्जयतु च ॥

अत्र गुणानां कृतेश्चान्योन्यालङ्कारत्वादन्योन्यम् ।

अथ विरोधमूलो विषमालङ्कारः कथ्यते ।

हेतोर्विलक्षणोत्पत्तौ घटने च विरूपयोः ।
अनिष्टघटने च स्याद्विषमालङ्कृतिस्त्रिधा ॥

यत्र हेतोर्विलक्षणकार्योत्पत्तिस्तदेकं विषमम् । विरूपयोर्वस्तुनोर्घटने द्वितीयम् । अनिष्टस्योत्पत्तौ च तृतीयम् । तत्र प्रथमं यथा—

रणे नञ्जविभोश्चक्षुःकोणः कोकनदारुणः ।
तनुते वैरिणामन्तस्तमालश्यामलं तमः ॥

अत्रारुणदृष्टिकोणात् श्यामलस्य तमसः प्रादुर्भावकथनाद्विलक्षणकार्योत्पत्तिः ।

द्वितीयं यथा—

धिक्कं सरोजभुवमुत्प्लवमानबुद्धिं यन्नञ्जराजविमताब्जदृशां पदेषु ।
तत्तादृशीं मृदुलतां सृजतैव येन क्लृप्ता कठोरवनचङ्क्रमदुर्दशा च ॥

अत्र नञ्जराजविमताब्जदृशां पदेषु तादृशमृदुलतावनचङ्क्रमदुर्दशयोश्च योजनाद्विरूपघटनात्मा विषमालङ्कारः ।

तृतीयं यथा—

जित्वा नञ्जविभुप्रतापविभवं प्राप्तुं महत्त्वं पय-
स्यम्बोधेरनलो निमज्य सुचिरं सान्द्रे तपस्यास्थितः ।
किं ब्रूमो विधिचेष्टितानि रभसादागत्य तत्रान्तरे
योगी कोऽपि तमेव सिन्धुसलिलैः साकं सलीलं पपौ ॥

अत्र प्रतापविजयेन महत्त्वमिष्टं प्राप्तुं स्थितस्य वह्नेराश्रयेण सह ग्रस्तत्वकथनादनिष्टोत्पत्तेरनिष्टजननरूपो विषमालङ्कारः ।

अथ विषमप्रातिभट्यात्समालङ्कारो निरूप्यते ।

समानयोश्चेद्घटना समालङ्कृतिरुच्यते ।

यत्रान्योन्यानुरूपपदार्थयोः सङ्घटना क्रियते स समालङ्कारः । यथा—

उचिते नञ्जराजस्य भुजे लसति मेदिनी ।
विटपे सहकारस्य वनप्रियवधूर्यथा ॥

अत्र भुजमेदिन्योरानुरूप्यकथनात् समालङ्कारः । अयं च विषमालङ्कारत्रये विरूपघटनप्रतिभटः समालङ्कारः ।

विरुद्धकार्योदयप्रतिपक्षः स यथा—

बिम्बाधरारुणरुचा नञ्जेन्द्रमनो विधाय बहुरागम् ।
काचन नरपतिकन्या मान्या संराजते जगति ॥

अत्र रक्तद्रव्येण रक्तद्रव्योत्पत्तेरनुगुणकार्योत्पत्तिरूपः प्राथमिकविषमालङ्कारप्रतिभटः समालङ्कारः । तृतीयविषमालङ्कारप्रतिभटः स सर्वैरुपेक्षितः ।

## अथ गम्यमानौपम्यप्रस्तावः ।

प्रकृतानामुतान्येषां तुल्यधर्मानुबन्धतः ।
औपम्यं यदि गम्येत सा मता तुल्ययोगिता ॥

यत्र केवलप्रकृतानां केवलाप्रकृतानां वा समानधर्मसम्बन्धादौपम्यं गम्यते सा तुल्ययोगिता । प्रकृताप्रकृतसमुदायप्रयोज्यात् दीपकाद्वैलक्षण्यं दर्शितम् । धर्मस्य च गुणक्रियारूपकतया द्वैविध्ये चातुर्विध्यमस्यालङ्कारस्य केचिदूचुः । अन्ये तु द्रव्यगुणकर्मणां तदभावानां च षण्णां धर्मत्वमङ्गीकृत्य प्रकृताप्रकृतगतत्वे द्वादशविधत्वे सति अस्य द्वादशविधत्वं कल्पयन्ति ।

प्रकृते क्रियागुणोभयरूपधर्मान्वयो यथा—

नञ्जनृपालक भवतः सुगुणा वाचश्च सर्वतो मधुराः ।
अरुणकरदलितनीरजनिस्सृतमकरन्दविभ्रमं दधते ॥

अत्र वाचां गुणानां च माधुर्यगुणरूपैकधर्मान्वयो विभ्रमधारणरूपक्रियान्वयश्च ।

गुणाभावक्रियाभावधर्मान्वयो यथा—

निर्मुक्तमालिन्यगुणाः प्रबन्धाः कीर्तिश्च नञ्जक्षितिपालमौलेः ।
चरन्ति सर्वेष्वपि दिक्तटेषु श्रान्तिं न विन्दन्ति तथाऽपि किञ्चित् ॥

अत्र मालिन्यगुणाभावश्रान्तिलाभाभावरूपक्रियाभावधर्मान्वयः ।

द्रव्यतदभावरूपोभयधर्मान्वयो यथा—

श्रीवीरनञ्जक्षितिपालसेनाकराब्जखड्गा विमतश्रियश्च ।
विमुक्तकोशाः समुपात्तकम्पा भवन्ति खर्वीकृतदृप्तभूपाः ॥

अत्र खड्गानां विमतश्रियां च कोशलक्षणद्रव्याभावधर्मान्वयखर्वीकृतदृप्तमहीपालात्मकद्रव्यरूपधर्मान्वयश्च ।

अप्रकृते क्रिया[तद्]भावात्मकधर्मान्वयो यथा—

दातरि नञ्जमहीन्द्रे सुमनस्तरवः सुपर्वधेनुश्च ।
व्रीडां वहन्ति नितरां निवसन्ति च तेन नैव भूमितले ॥

अत्राप्रकृतानां कल्पवृक्षाणां कामधेनोश्च व्रीडावहनक्रियान्वयो भूतलनिवासाभावात्मकक्रियाभावान्वयश्च ।

गुणतद्भावान्वयः स यथा—

वीरनञ्जविभोर्बाहौ वहमाने महीभरम् ।
स्वैरं वशासु रज्यन्ते न विषीदन्ति दिग्गजाः ॥

अत्राप्रकृतेषु दिग्गजेषु रागात्मकगुणान्वयो विषादाभावात्मकगुणान्वयश्च । एवमन्यदप्यूह्यम् । इहालङ्कारे गम्यमानौपम्यं विवक्षितम् न वास्तवम् ।

प्रकृतानां चेतरेषामौपम्यं गम्यते यदि ।
समानधर्मसम्बन्धाद्दीपकं तत्तु षड्विधम् ॥

प्रकृताप्रकृतसमुदायसम्बधी समानधर्मो यत्रौपम्यं दीपयति तत्र दीपकम् । अत्र समानधर्मस्यादिमध्यान्तगतत्वेन त्रैविध्ये गुणक्रियास्वरूपेण द्वैविध्ये षड्विधत्वं केचिदूचुः । तद्विचारचेतसां नान्तरङ्गमालिङ्गति । धर्मस्यादिमध्यान्तगतत्वेन भेदे काव्यचारुतायां विशेषादर्शनात् । अन्यथा प्रथमद्वितीयपदगतत्वप्रकारैर्भेदान्तराणि किमिति न सिध्येयुः । तस्मान्न प्राथमिकं त्रैविध्यमादरणीयम् । नाप्युत्तरं द्वैविध्यं वक्तुं युक्तम्, द्रव्यादिभेदेन धर्मस्य षड्विधत्वोक्तेः । तस्मात्प्रकृताप्रकृतसम्बन्धिसमानधर्मस्य द्रव्यादिभेदेन षड्विधत्वात्तदालम्बनस्य दीपकस्य षड्विधत्वं सुवचम् ।

तत्र गुणतद्भावरूपधर्मान्वयो यथा—

विशदयतो जगदेतौ विमलौ नञ्जेन्द्रकीर्तिरिन्दुश्च ।
सहते नैव तमिस्रां तिग्मकरस्तत्प्रतापश्च ॥

अत्र—कीर्तिचन्द्रयोर्विमलत्वरूपगुणान्वयः । तिग्मकरप्रतापयोः सहनाभावलक्षणगुणाभावान्वयश्च ।

क्रियातद्भावान्वयो यथा—

गम्भीरतां नञ्जमहीन्द्रचेतो वहत्यजस्रं पयसां निधिश्च ।
नञ्जक्षमाचन्द्रयशश्च गङ्गापयश्च नैव त्यजतो महत्त्वम् ॥

अत्र वहनरूपक्रियायास्त्यागाभावात्मकक्रियाभावस्य चान्वयः ।

द्रव्यतदभावान्वयो यथा—

अयुक्तकान्ताजनचित्तपद्मप्रकामसङ्कोचनलब्धवर्णः । (?)
कलानिधिर्नञ्ञविभुश्च चन्द्रः स्वभावतोऽनुष्णाकरो विभाति ॥

अत्र नञ्ञविभुचन्द्रयोः कलारूपद्रव्यान्वयः, उष्णकराभावरूपद्रव्याभावान्वयश्च श्लेषानुप्राणितः । तदेवं दीपकानां षाड्विध्यम् ।

पदार्थगतालङ्कारद्वयनिरूपणानन्तरं वाक्यार्थगतालङ्कारद्वयमुच्यते ।

यत्र वाक्यद्वये वस्तुप्रतिवस्तुनया भवेत् ।
समानधर्मनिर्देशः प्रतिवस्तूपमा मता ॥

यत्र हि उपमानोपमेयवाक्यद्वये सामान्यधर्मः कथितपदस्य पुनरुक्तिदोषग्रस्तत्वाच्छब्दान्तरेणोपादीयमानः प्रकृताप्रकृतयोरौपम्यं गमयति सा प्रतिवस्तूपमा । इयं साधर्म्यवैधर्म्याभ्यां दृश्यते ।

तत्र प्रथमं यथा—

स्तोतव्यः कलुलेवंशः सदा वंशेषु भूभुजाम् ।
प्रशंसनीयः सततं पयोधिषु पयोम्बुधिः ॥

अत्र उपमानोपमेयवाक्यद्वयवर्त्तिभ्यां स्तोतव्यप्रशंसनीयपदाभ्यामभिन्नावेव स्तुत्यर्हत्वरूपौ धर्मौ स्वीक्रियमाणौ प्रकृताप्रकृतयोः कलुलेवंशपयोम्बुध्योरौपम्यं गमयतः। उपमेयोपमायां तु—औपम्यस्य वाच्यत्वम् धर्मयोश्च स्वतो भिन्नयोरेवातिशयोक्तिवशादभेदः। इह तु तदुभयवैपरीत्यमित्यनयोर्महान् भेदः । अस्य वस्तुप्रतिवस्तुभावोपजीवितया बिम्बप्रतिबिम्बभावोपजीविनो दृष्टान्तालङ्कारात् भेदः स्फुट एव ।

द्वितीयं यथा—

नञ्ञेन्द्र एव नियतं वर्धन्ते विदुषां गिरः ।
विना वसन्तादन्यत्र न पुष्यन्ति पिकस्वराः ॥

अत्र वर्धन्ते पुष्यन्तीतिपदयोरभिन्नार्थकत्वम् । यथा वसन्तेन कोकिलानां स्वरपोषणं क्रियते तथा नञ्ञेन्द्रेण विदुषां वाचामभिवृद्धिः क्रियत इत्यनयोरौपम्यं गम्यते ।

'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते ।
सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निरुच्यते ॥'

यत्र बिम्बप्रतिबिम्बभावेन सामान्यं वाक्यद्वयेन निर्दिश्यते स दृष्टान्तालङ्कारः। सोऽपि प्रागुक्तरीत्या द्विविधः।

तत्रसाधर्म्येण यथा

कीर्तिप्रतापरुचिरो नञ्जेन्द्रो राजते भुवि।
पुष्पप्रवालमहितो मन्दारो वर्धते दिवि ॥

अत्र कीर्तिप्रतापयोः पुष्पप्रवालयोश्च नञ्जेन्द्रमन्दारयोश्च बिम्बप्रतिबिम्बभावादौपम्यम्।

वैधर्म्येण यथा—

कीर्तिं जनयितुं शक्तः कलुलेनञ्जभूपतिः।
विना चन्द्रमसं नान्यश्चन्द्रिकापोषणोत्सुकः ॥

अत्र नञ्जराजचन्द्रमसोः कीर्तिजननचन्द्रिकापोषणयोर्बिम्बप्रतिबिम्बभावादौपम्यम्।

यथावा—

विसृजत रिपुराजा विस्तृतान् वीरवादान्
रणभुवमवतीर्णो नञ्जभूपः सकोपः।
जगति मदगजानां बृंहितान्येव तावत्
धुरि भवति न यावद्रोषरुद्धो मृगेन्द्रः ॥

यथा सिंहोपसर्पणमात्रेण गजानां बृंहितानि निलीयन्ते तथा नञ्जराजस्य यरण्यवतरणमात्रेण शात्रववीरवादा विसृज्यन्त इति वैधर्म्यात् बिम्बप्रतिबिम्बनम्।

अथ गम्यमानौपम्यप्रस्तावान्निदर्शनं निरूप्यते।

अन्यधर्मस्य सम्बन्धासङ्गतौ वस्तुनोर्द्वयोः।
प्रतिबिम्बनमाक्षिप्तं यत्र तत्र निदर्शना ॥

सा द्विविधा। प्रकृतधर्मस्याप्रकृतसम्बन्धासम्भवमूलका; अप्रकृतधर्मस्य प्रकृतधर्मसम्बन्धासंभवमूलका। तत्र प्रथमं यथा—

राजते नञ्जराजस्य चामरग्राहिणी वधूः।
मरालसेवितप्रान्तशारद्विभ्रममाश्रिता ॥

अत्र वध्वा अप्रकृतशरच्छिभ्रमासम्भवेन विभ्रमसदृशविभ्रमः समाक्षिप्यत इति बिम्बप्रतिबिम्बनम् ।

द्वितीयं यथा—

नञ्जभूपालनगरीजलजाक्षीजनश्रियम् ।
वहन्ति सततोल्लासाः पुरन्दरपुरस्त्रियः ॥

अत्राप्रकृतपुरन्दरस्त्रीषु प्रकृतश्रीसम्बन्धासम्भवात् तत्सदृशश्रीराक्षिप्यत इति प्रतिबिम्बकरणम् । उपमानक्रियायाउपमेये स्वसदृशक्रियान्तरबोधनमपि निदर्शनाविशेषः । यथा—

रजोगुणस्यैव फलं तदेतत् मित्रप्रकाशव्यवधाविधानम् ।
इतीव सम्बोधयितुं दिनेशं रुन्धन्ति नञ्जेन्द्रचमूरजांसि ॥

'भेदप्रधानसाधर्म्यमुपमानोपमेययोः ।
आधिक्याल्पत्वकथनाद्व्यतिरेकः स उच्यते ॥'

यत्रोपमानादुपमेयस्याधिक्येनाल्पतया वा निरूपणेन भेदप्रधानं साधर्म्यं गम्यते स व्यतिरेकालङ्कारः । यथा—

नञ्जक्षितीन्द्रस्य यशोनुषङ्गात् दोषाकरस्यापि गतः कलङ्कः ।
तदीयवैरिप्रमदामुखानां मालिन्यभारो नितरां बभूव ॥

अत्रोपमेयमुखन्यूनता

उपमेयाधिक्यं यथा—

नञ्जक्षितीन्द्रस्य कृपाणधारा कलिन्दकन्येव कठोरवेगा ।
परन्तु दृप्यद्बलभद्रबाहाविजृम्भवृत्तेरसहिष्णुरास्ते ॥

अत्रोपमेयखड्गधाराया दृप्यद्बलभद्रबाहाविजृम्भवृत्त्यसहिष्णुत्वरूपधर्मेणोपमानीभूतकलिन्दकन्यापेक्षयाऽऽधिक्यम् ।

'प्रकृताप्रकृतोभयगतमुक्तं चेत् शब्दमात्रसाधर्म्यम् ।
श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वये नान्त्ये ॥'

यत्र केवलप्रकृतयोर्वा केवलाप्रकृतयोर्वा श्लेषो भवति तत्र प्रकारद्वयेऽपि विशेषणविशेष्यश्लिष्टता । प्रकृताप्रकृतविषये विशेषणमात्रश्लिष्टता । विशेष्ययोरपि श्लिष्टत्वे शब्दशक्तिमूलकध्वनित्वप्रसङ्गात् । तदेवं त्रिविधः श्लेषः ।

तत्र केवलप्राकरणिकयोर्यथा—

कलुलेनञ्जराजेन्द्र भवतः पुरतोरणः ।
चित्ररेखाङ्गनाक्रान्तस्तनुते पश्यतां मुदम् ॥

अत्र नञ्जेन्द्र चित्ररेखाङ्गनाक्रान्तः–चित्ररेखानिर्मिताङ्गनाक्रान्तः भवतः पुरतोरणः–नगरबहिर्द्वारम् । अन्यत्र चित्ररेखाङ्गना–चित्ररेखा नाम सुराङ्गना तया क्रान्तो भवतो रणः पुरतः–अग्रे मुदं तनुते । भावयतां प्राक् प्रवृत्तोऽप्यद्यापि पुरतो दृश्यमान इव मुदं विधत्त इत्यर्थः । तथा च रणनगरतोरणयोः प्रकृतयोः श्लेषः प्रकृतगोचरः ।

अप्रकृतगोचरो यथा—

मयूखालीढभुवनं चित्रभानुं हसन्नयम् ।
कलुलेनञ्जभूपाल त्वत्प्रतापो विराजते ॥

अत्र चित्रभानुपदेन 'सूर्यो वह्निश्चित्रभानु' रिति कोशानुशिष्टसूर्याग्नी अप्रकृत्वेन गृह्येते । मयूखालीढभुवनं–किरणाक्रान्तप्रपञ्चं ज्वालावलीढसलिलं चेत्यर्थद्वयं क्रमेण सूर्याग्न्योर्विशेषणम् । द्वयोरप्यप्रकृतयोः श्लेषात् अप्रस्तुतगोचरत्वम् । निरुक्तोभयस्थलेऽपि न ध्वनित्वशङ्का । अर्थद्वयप्रतिपादने प्रस्तुतत्वेन अन्यत्वेन वैषम्याभावात् अभिधाया एव सामर्थ्यात् ।

तृतीयं यथा—

विष्वक्सेनोर्जितख्यातिर्विक्रमाक्रान्तविष्टपः ।
देवराजानुजो भाति नञ्जभूपालशेखरः ।

अत्र प्रकृताप्रकृतयोर्नञ्जराजविष्णवोः श्लेषः ।

अयञ्च श्लेषो द्विविधः । शब्दश्लेषोऽर्थश्लेषश्चेति । ननु शब्दश्लेषस्थले प्रयत्नादिभेदात् स्फुट एव शब्दभेद इति चेत् । सत्यम्, भेदोऽस्ति । तथाऽपि जतुकाष्ठन्यायेन शब्दयोरितरेतरश्लिष्टत्वाच्छब्दगतत्वव्यवहारः । अत एव शब्दश्लेषे भङ्गसहिष्णुता । अर्थश्लेषे तु प्रयत्नादिभेदस्य शब्दभेदकस्याभावेन शब्दैक्यनिश्चये सति एकनालावलम्बिफलद्वयन्यायेन श्लिष्टत्वमर्थयोरिति शब्दविपरिवृत्त्ययोग्यत्वम्, भङ्गासहिष्णुत्वञ्चेत्यालङ्कारिकरहस्यम्, यदत्र प्रकृताप्रकृतोदाहरणे शब्दशक्तिमूलकध्वनिमिच्छन्ति प्राञ्चः, तत् प्रकृताप्रकृताभिमानमूलकस्योपमालङ्कारस्य व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्यावश्यंभावेन वृत्त्यनपेक्षणादित्यलं बहुना । उत्तरयोरर्थश्लेष इति विवेकः ।

विशेषणवैचित्र्यमूलत्वात् परिकरालङ्कारो निरूप्यते ।

अलङ्कारः परिकरः साभिप्राये विशेषणे ।

यत्र विशेषणं साभिप्रायं भवति तत्र परिकरालङ्कारः ।

यथा—

नञ्जेन्द्र तव कृष्णाय कृपाणाय विरोधिनः ।
आत्मार्पणं वितन्वन्ति दिव्यभोगजिघृक्षवः ॥

अत्र कृष्णायेतिविशेषणं वैरिणां ग्रहणेच्छागोचरीभूतदिव्यभोगसम्पादनसामर्थ्याभिप्रायकम् ।

यथावा—

इन्द्रं न शास्मि धर्मेषु नयनैर्न शृणोमि च ।
वक्तुं श्रोतुमहं शक्तः कथं नञ्जविभोर्गुणान् ॥

अत्र धर्मेष्विन्द्रं न शास्मि नयनैर्न शृणोमि चेति विशेषणद्वयं क्रमेण स्वस्मिन् बृहस्पतिशेषासाधारणकार्यकरणप्रतिषेधमुखेन नाहं बृहस्पतिर्न शेष इत्यभिप्रायगर्भम् । प्रथमोदाहरणे पदार्थरूपं विशेषणम् । द्वितीयोदाहरणे वाक्यार्थरूपं विशेषणम् ।

'विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत् ।
निषेधाबाधकथनमाक्षेपः स उदाहृतः ॥'

यत्र विशेषप्रतिपत्त्यर्थमुक्तवक्ष्यमाणयोः प्राकरणिकयोर्निषेधाभासः कथ्यते स आक्षेपः । अत्र उक्तविषये वस्तु वा कथनं वा निषिध्यत इति द्वैविध्यम् । वक्ष्यमाणविषये तु कथनीयमेव निषिद्ध्यते । तत्रापि सामान्यप्रतिज्ञा, विशेषनिषेधः । अंशोक्तावंशान्तरस्य वा निषेध इति द्वैविध्ये चातुर्विध्यम् ।

अत्र प्रथमं यथा—

न भवतु नञ्जमहीन्द्रो मृदुलप्रकृतिस्तथापि पदनम्रान् ।
नरपतितिलकान्नियतं कलयति केनापि नैव नमनीयान् ॥

अत्र नञ्जेन्द्रो मृदुलप्रकृतिर्न भवतीति वदतो वैरिणः प्रति प्रत्युक्तिरूपे तदमात्यवचने प्रस्तुते (त ?) मृदुलप्रकृतित्वरूपवस्तुनः कृतिनायकनिष्ठस्य प्रतिषेधोभासा ( बाधा ? ) दाभासीभवन् स्वचरणनम्रनरपतिमकुटेषु केनाप्यजय्यत्वसम्पादननिदर्शनान्नञ्जराज एव मृदुलप्रकृतिर्नेतर इति प्रतिपादनपुरःसरं यूयमपिस्थिरतरश्रियः सम्पादनाय तत्पदयोर्नतिं कुरुतेत्यर्थविशेषमाक्षिपति ।

कथननिषेधो यथा—

दयस्वेत्युक्तिर्नस्त्वयि तु न चमत्कारविषयः
कृपासाधारण्यं वहति कलुलेवंशविभुषु ।
प्रसीदेति ब्रूमस्तदिदमपि सिद्धार्थकथनं
किमास्ते विज्ञाप्यं प्रकृतविदि नञ्जक्षितिपतौ ॥

अत्र दयस्वेत्यादिकथने निषेधः सर्वथाऽस्मासु दयाऽधिकं भवता विधेयेत्यर्थविशेषं प्रत्याययति ।

सामान्यप्रतिज्ञया विशेषनिषेधो यथा—

भूपाल नञ्जनरनाथविरोधिनस्ते
किञ्चिद्वदामि भवतो न च वा वदामि ।
आकर्ण्यते हि भवताऽपि कठोरसान्द्र-
ग्रावौघदन्तुरवनभ्रमणप्रथावः ( यासः ? ) ॥

इदं च विमतराजं प्रति तदमात्यवचनम् ।

अत्र किञ्चिद्वदामीति सामान्यतः प्रतिज्ञाय भवतो न वदामीति निषेधाभासेन नञ्जराजविरोधं त्यज, न चेद्वनभ्रमणं तवाप्यपरिहार्यं भविष्यतीत्यर्थविशेषः प्रतीयते ।

अंशोक्तावंशान्तरस्य निषेधो यथा—

त्वयि नञ्जनरेन्द्रसक्तचित्ता तरुणीचारुशिरीषकोमलाङ्गी ।
प्रलयानिलदारुणश्च कामः कथयित्वाऽलमतः परं विशेषम् ॥

अत्र बाधकः क्रूरः कामः, बाला त्वत्यन्तमृदुलेत्येकदेशकथनपूर्वकमुत्तरवक्तव्यावश्यककथननिषेधेन यदित्वमिदानीं तां न पालयसि ततो महानायासो भविष्यतीत्यर्थविशेषः प्रतीयते ।

केवल पूर्वोक्तस्य प्रतिषेधमात्रमाक्षेप इति केचित् ।

यथा—

कल्पद्रुमः काङ्क्षितदानदक्षः सृष्टो विधात्रा न कथं धरण्याम् ।
यद्वा विचिन्त्यालमशेषदाता विनिर्मितोऽयं भुवि नञ्जराजः ॥

अथ गम्यस्तुतिप्रस्तावात् व्याजोक्तिर्निरूप्यते ।

यत्र वाच्या स्तुतिर्निन्दां निन्दा वा स्तुतिरर्पयेत् ।
तत्र व्याजस्तुतिं नामालङ्कारं कवयो विदुः ॥

यत्राभिधीयमाना निन्दा प्रकृते स्तुत्ये प्रमाणबाधिता सती स्तुतिमर्पयति, स्तुतिर्वा निन्द्ये तादृशी सती निन्दामर्पयति, तत्र व्याजस्तुतिरलङ्कारः। व्याजस्तुतिशब्दश्च स्तुतेर्वाच्यत्वे निन्दाया गम्यत्वे व्याजरूपास्तुतिः। तथा तद्वैपरीत्ये व्याजेन स्तुतिरिति च प्रवर्तते।

ननु स्तुत्ये निन्दाया अप्रकृतायाः क्रियमाणायाः प्रकृतस्तुत्याक्षेपकत्वं परत्र स्तुतेर्निन्दाक्षेपकत्वमित्यप्रस्तुतप्रशंसा सेयमितिचेत्सत्यम्। तथापि स्तुतिनिन्दात्मकविच्छित्यन्तरालम्बनेन परिगणनात्पार्थक्यमिति रहस्यम्।

तत्र निन्दया स्तुतिर्यथा—

अव्याजमप्रतिहतं नियतं लसन्त्या
कामं कयापि कृपया परतन्त्रवृत्तिम्।
सर्वस्वतन्त्र इति नञ्जमहीमहेन्द्र
त्वां केन हन्त विबुधा अपि संस्तुवन्ति॥

अत्र निन्दया परमकृपालुत्वरूपधर्मस्तुतिरेवावगम्यते।

स्तुत्या निन्दा यथा—

विचित्रा धारणाशक्तिर्नञ्जेन्द्र तव विद्विषाम्।
यैर्दृष्टमात्रात्त्वत्खड्गादाददे तरलस्थितिः॥

अत्र विद्विषां बुद्धिविशेषस्तुत्याऽन्यखड्गदर्शनमात्रेणापि चाञ्चल्यं प्राप्तमिति तेषु निन्दा गम्यते। इमे निन्दास्तुती समानविषयके।

भिन्नविषयका सा यथा—

वीरनञ्जमहीकान्ते सकृत्प्रणतिकारिणाम्।
राज्ञामम्बुरुहाक्षीणां भाग्यं कस्य स्तुतिक्षमम्॥

इदं च शत्रुस्त्रीणां वचनम्। अत्र स्वान्यासां नञ्जराजसेवकराजस्त्रीणां भाग्यस्तुत्या मूर्खनृपकरावलम्बिनीषु स्वासु निन्दा द्योत्यते। एवं निन्दया स्तुतिरपि बोद्ध्या।

गम्यप्रस्तावादप्रस्तुतप्रशंसोच्यते।

अप्रस्तुतेन वाच्येन प्रस्तुतं गम्यते यदि।
अप्रस्तुतप्रशंसेयं कथिता पञ्चधा बुधैः॥ इति।

यत्राप्रस्तुतस्य (अ) प्रस्तुतत्वादेव वर्णनं समु (मनु ?) चितं सत्प्रकृतं गमयति तत्राप्रस्तुतप्रशंसा। अप्रस्तुतात्प्रस्तुताक्षेपश्च यत्किञ्चित्सम्बन्धाभावे न

संभवतीति सम्बन्धः कश्चिदभ्युपगन्तव्यः। स च सारूप्यं सामान्यविशेषभावः कार्यकरणाभावश्चेति त्रिविधो भवति तन्निबन्धनेयं पञ्चधा भिद्यते।

तत्र सारूप्यात्प्रस्तुताक्षेपो यथा—

परिमलकवलितजगता चम्पकवृक्षेण बालकेनापि।
सदृशाः किमन्यतरवः शाखामात्रावृताखिलाशान्ताः॥

अत्राप्रस्तुतचम्पकस्तुत्या केवलमाकारोन्नता अन्ये महीपाला बालेनापि नञ्जराजेन कथं सदृशा भवन्तीत्यर्थविशेषः प्रस्तुतस्सारूप्यादवगम्यते।

सामान्याद्विशेषाक्षेपो यथा।

धन्यास्त एव कलुलेनरलोकपाला
वंशेऽत्र यैरजनि मञ्जुलकीर्तिपुञ्जैः।
श्लाघ्यश्च सोऽपि जगदुत्सवमूर्तिरिन्दु-
र्वंशस्स एव यदुपज्ञमभूदवन्याम्॥

अत्र नञ्जराजस्य गुणमहत्त्वे वर्णनीये तद्वंश्यानां महत्त्वकथनमप्रस्तुतम्।

यथा वा—

अलं बहूक्त्या कलुलेनृपाला विभो तवास्मीति वचो वदत्सु।
आगांसि युष्मास्वपि वा महान्ति पुराकृतानीव नहि स्मरन्ति॥

अत्र नञ्जराजगुणे वर्णनीये तद्वंश्यानां प्राञ्चां भूपतीनां सकृत्प्रपन्नेषु रिपुषु महापराधानपि प्राग्जन्मकृतानिव नहि स्मरन्तीति प्रसिद्धमिति गुणवर्णनं सामान्यतः परिगृहीतम्।

विशेषात्सामान्यप्रतीतिर्यथा—

सकृदपि कृतामुपकृतिं स्मरति सदाऽन्यस्य नञ्जभूपालः।
बहुविहितेष्वपराधेष्वणुमपि न कदापि मनसि निदधाति॥

अत्र नञ्जभूपालः सकृत्कृतामप्युपकृतिमन्यदीयां सदा स्मरति। अपराधेषु बहुषु सत्स्वपि अणुमपि मनसि न करोतीति विशेषेणाप्रस्तुतवर्णनेन सत्पुरुषाणां परकीयगुणमात्रमेव स्वभावः। न तु दोषपरिग्रहणञ्चेति सामान्यं प्रस्तुतं कविसंरंभगोचरं प्रतीयते।

कार्यात्कारणप्रतीतिरितरः।

यथा—

आयोधनाङ्गणमुपेयुषि नञ्जभूप त्वय्युग्रकोपपरुषस्फुरिताट्टहासे।
प्रत्यर्थिभूमिपतयो भवतो मुहूर्ताच्चण्डांशुमण्डलमखण्डिषुरात्तशस्त्राः॥

अत्र चण्डांशुमण्डलखण्डनरूपकार्यस्योक्त्या तत्कारणीभूतः प्रत्यर्थिभूपतीनां तनुपरित्यागः प्रतीयते ।

यथा वा—

प्रशान्त इव दावाग्निश्शीतांशुरिव भानुमान् ।
नञ्जराजप्रतापेऽस्मिन् भुवं धात्रावतारिते ॥

अत्र कार्यभूतस्य दावाग्निसूर्यनिष्ठत्वेन तैक्ष्ण्याभावस्य कथनेन तत्कारणीभूतस्ततोऽपि तीक्ष्णभावो नञ्जराजे प्रतीयते ।

कारणात्कार्यप्रतीतिरित्येकः—

स्थाने नञ्जनरेन्द्रस्य यशस्तोमप्रकल्पने ।
विधेरनेकशीतांशुसामग्रीसङ्ग्रहश्रमः ॥

अत्र यशस्तोमविधाने अनेकशीतांशूनां सामग्रीत्वेन कथनेन कार्यभूते यशस्तोमे विशदिमविशेषरूपमुत्कृष्टरूपं विशेषकार्यं प्रतीयते । तदेवं पञ्चधा अप्रस्तुतप्रशंसा । अत्राप्रस्तुतस्य प्रस्तुतगमकत्वोक्त्या समासोक्तिव्यावृत्तिः । न च कार्यात्कारणप्रतीतावनुमानान्तर्भावशङ्का । अनुमानालङ्कारे प्रत्याय्यप्रत्यायकयोर्द्वयोरपि प्राकरणिकत्वात् । अनेन पर्यायोक्तिव्यावृत्तिरपि ।

'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः'

यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यते तत्र प्रस्तुताङ्कुरालङ्कारः अप्रस्तुतप्रशंसायां वाच्यार्थः पुनरप्रस्तुतत्वादवर्णनीय इति तत्राभिधायामपर्यवसितायां तेन प्रस्तुतार्थव्यक्तिरलङ्कारः इह वाच्यस्य प्रस्तुतत्वेनाभिधायां पर्यवसितायामर्थसौन्दर्यबलेनाभिमतार्थव्यक्तिध्वनिरेवेति केचित् । वस्तुतस्त्वलङ्कार एव । तद्विचारस्त्वन्यत्र कार्यः । सप्रस्तुताङ्कुरोऽपि सारूप्यादिभेदेन पञ्चविधः ।

तत्र किञ्चिदुदाह्रियते सारूप्येण यथा—

भो वारणेन्द्र भवतः क्रीडामात्रेण भिन्दतोऽपि रिपून् ।
मृदुलतरसल्लकीतरुपल्लवभङ्गेन का यशस्स्फूर्तिः ॥

इदं च शात्रवसेनावचनम् । अत्र नञ्जराजसेनागजवर्णनेन प्रस्तुतेन सारूप्यादखिलजगत्प्रधानशौर्यभरितमहामहीपालभेदनमपि लीलया कृतवतो नञ्जराजस्य दुर्बलतरमत्पराभवकरणे कीदृग्यशस्स्फूर्तिरित्यन्योऽयमभिमतोऽर्थः प्रस्तुतो द्योत्यते ।

कार्यात्कारणप्रतीतिर्यथा—

निमेषं नञ्जराजस्य गाहमाना रणाङ्गणम् ।
द्दसा निमेषव्यापारं विस्मरन्त्यविलम्बितम् ॥

अत्र देव तादात्म्यमिव तदेकदेशतया सन्ततनिमेषविस्मरणमपि रणावगाहनफलकेन वर्णनीयमिति तन्मुखेन देवतादात्म्यं गम्यते । इत्थमेवान्यदप्यूह्यम् ।

गम्यप्रस्तावात्पर्यायोक्तिर्निरूप्यते—

कारणं गम्यते यत्र प्रस्तुतात्कार्यवर्णनात् ।
प्रस्तुतत्वेन सम्बद्धं तत्पर्यायोक्तमुच्यते ॥

यत्र प्रस्तुतस्यैव कार्यस्य वर्णनात्प्रस्तुतमेव कारणं गम्यते तत्पर्यायोक्तिः ।

यथा—

संग्रामोद्यत नञ्जभूपतिचमूरेणूत्करच्छादिते-
ष्वभ्यर्णे भ्रमदिन्दुनिर्यदमृतोत्सिक्तेष्वरिक्ष्माभृताम् ।
सौधाग्रेष्वभितः प्ररूढहरितेष्वागत्य नित्यं भृशं ।
नर्दत्यन्धकपर्दिनस्स्फुटतर क्षीबो महोक्षो मुहुः ॥

अत्र शत्रुसौधाग्रेषु रेणुसंक्रमणफलत्वेन वर्णनीयेन हरित प्ररोहणरूपकार्येण स्वकारणं प्रस्तुत एव शात्रवप्रवासो गम्यते । गम्यस्यैव भङ्ग्यन्तरेण कथनं पर्यायोक्तमिति वा लक्षणम् ।

वीरविभुसुकृतराशे विश्वाधिकचरणकमलकलहंसः ।
देवो विभुरनुजातो दीव्यति ननु कोऽपि वसुमती विभवः ॥

अत्र नञ्जराजः असाधारणरूपेण गम्यः वीरविभुसुकृत राशित्वाद्याकारेणाभिहितः ।

पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।

लज्जाणमीअवअणं मह विहुणा कलुलपुण्णचंदेण ।
तिलअसमीअरणमिसा उण्णमिअ किअं अ किंवि किंवि सहि ॥
पश्च प्रतीपान्युपमामृषात्वमन्यस्य वर्ण्यत्वमपार्थता च ।
वर्ण्यस्य वा निस्समताभिमाननिवारणश्चान्यतरोपमोक्त्या ॥

---

(अ) लज्जानमितवदनं मम विभुना कलुलपूर्णचंद्रेण । तिलकसमीकरणमिषादुन्नमय्य कृतं च किमपि किमपि सखि ॥

मृषेति वर्णनं प्रथममन्यस्योपमेयत्त्ववर्णनं द्वितीयम्, वैयर्थ्यवर्णनं तृतीयम्, वर्ण्यमुपमानीकृत्यान्याहङ्कारनिवारणं चतुर्थम्, अन्यदुपमानीकृत्य वर्ण्याहङ्कारनिवारणं पञ्चमम् ।

तत्राद्यं यथा—

अश्रान्तदानधुर्येण नञ्जभूपतिना जनाः ।
आमध्याह्नप्रदातारमाहुः कर्णं मृषा समम् ॥

अत्र कर्णस्यौपम्ये मृषात्वं वर्ण्यते ।

द्वितीयं यथा—

राजते गुणसंपन्नो यथा नञ्जमहीपतिः ।
तथा विभान्ति सर्वेऽपि सागरा रत्नसंभृताः ॥

अत्रोपमानस्योपमेयत्ववर्णनम् ।

तृतीयं यथा—

वितरति वाञ्छितमखिलं वीरमहीपालनन्दने नृपतौ ।
किममर्त्यरत्नकल्पकसौवर्गगवीप्रसङ्गेन ॥

अत्रोपमानवैयर्थ्यवर्णनम् ।

चतुर्थं यथा—

मुकुलत्करपद्मकोशभाजां सरसां श्रियमर्पयामि नित्यम् ।
इति गर्वममुं जहीहि भानो भवता सदृशोऽस्ति नञ्जविभुः ॥

अत्रावर्ण्यस्याहन्तानिवारणवर्णनम् । एवमन्यदप्यूह्यम् ।

अथ तर्कन्यायमूलालङ्काराः कथ्यन्ते ।

साध्यसाधनमात्रोक्तावनुमान उदाहृतः ।
तर्कानुमानरूपाभ्यां तत्प्रवृत्तिर्द्विधा भवेत् ॥

यत्र किञ्चिद्गम्यं निश्चित्य तद्ज्ञापकतयाऽन्ये निर्दिश्यन्ते तत्रानुमानालङ्कारः । अत्र मात्रचाव्याप्तिपक्षधर्मतयोः प्रदर्शनं निवर्त्यते । तयोरपि प्रदर्शने तर्कानुमानत्वापातात् । वस्तुतस्तु ताभ्यामत्र भवितव्यमेव, तदभावे काव्यलिङ्गतापत्तेः । किञ्चात्र कविनिर्मितचातुर्यमहिम्ना श्लिष्टरूपातिशयोक्त्याद्यालम्बनेनानुमानोत्थानेन न तार्किकानुमानत्वप्रसङ्गकलङ्क इति चमत्कारिताऽप्यस्योपपाद्यते । इदं तर्करूपेणानुमानरूपेण च द्विविधा ।

तत्राद्यं यथा—

सौमित्रिरुतवा रामो नूनं नञ्जमहीपतिः ।
न चेद्राजकुलेष्वेष सबलातिबलः कथम् ॥

अनुमानरूपेण यथा—

यतो राजोन्मेषं स्थगयति गजांभोधरघटा-
प्रभूतं शस्त्राग्नेश्शकलसुरगोपैरपि यतः ।
यतः कीलालौघैरपि दश दिशः पङ्किलभुवो
ततो मन्ये नञ्जक्षितिपतिरणं वर्षसमयम् ॥

'हेतोर्वाक्यपदार्थत्त्वे काव्यलिङ्गमुदाहृतम् ।'

यत्र हेतुर्वाक्यार्थः पदार्थो वा इतरार्थसमर्थकः स्यात्तत्र काव्यलिङ्गम् । तच्चोक्तरीत्या द्वेधा । पदगतत्त्वेऽपि विशेषणत्वेनैव हेतुत्त्वं कार्यम् । यत्र पुनस्तृतीयादिना हेतूच्छित्तिः, न तत्रासावलङ्कारः । किन्तु हेतुमात्रश्चमत्काराभावात् । न चायमनुमानेऽन्तर्भवतीति वाच्यम् । ज्ञाप्यज्ञापकभावाभावात् । व्याप्तिपक्षधर्मतयोरनुपसंहाराच्च । समर्थ्यसमर्थकभावो हि प्रकृतेऽभिमतः । नचार्थान्तरन्यासाभेदाशङ्का । प्रकृते समर्थ्यसमर्थकयोर्वाक्यार्थयोराकाङ्क्षासद्भावस्य प्रयोजकस्वीकारात् । अर्थान्तरन्यासे तु समर्थ्यसमर्थकयोराकाङ्क्षाभावात् कथं तर्हि समर्थनम् । उत्थापिताकाङ्क्षयाऽपि तदुत्पत्तेः ।

तत्र वाक्यगतं यथा—

विराजते नञ्जनरेन्द्रमूर्त्या महीतले सम्प्रति पारिजातः ।
अकिञ्चनत्वोपनतं विषादं विमुञ्चताद्यैव बुधास्समस्ताः ॥

अत्र विषादमोचनरूपकार्यसमर्थको महीतले नञ्जराजात्मना पारिजातप्रकाशो वाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

पदगतं यथा—

नञ्जेन्द्र त्वत्प्रतापाग्नेस्सन्निधानेऽपि वैरिभिः ।
न विसृष्टोऽञ्जनश्यामो विषादात्मा तमोभरः ॥

अत्र विषादस्य तमोभरत्वसमर्थने अञ्जनश्यामत्वरूपपदार्थो हेतुरभ्युपगन्तव्यः ।

सामान्यं वा विशेषेण विशेषो वा ततोऽन्यतः ।
समर्थ्यते यत्र तत्रार्थान्तरन्यास ईरितः ॥

अत्र सामान्यविशेषयो र्वाच्यत्वं दृष्टान्तालङ्कारे तु सामान्ययोरेव वाच्यत्वमित्यनयो र्महान् भेदः ।

सामान्येन विशेषसमर्थनं यथा—

जातोऽपि नञ्जेन्द्रकृपाणमूर्त्या राहुस्सदा द्दसयशस्सुधांशुम् ।
गवेषयत्येव मुहुर्गृहीतुं त्याज्या न जन्मान्तरवासनैव ॥

अत्र जन्मान्तरवासना न त्याज्येति सामान्येन कृपाणमूर्त्या जातस्यापि राहोर्द्विषद्यशश्चन्द्रगवेषणरूपविशेषस्समर्थ्यते ।

विशेषात्सामान्यसमर्थनं यथा—

स्तोकाकृतिरपि चतुरस्तेजस्वी भवति परतिरस्करणे ।
दलयन्ति हि नञ्जनृपतेः प्रतापवह्नेः कणोऽपि भूमिभृतः ॥

अल्पोऽपि तेजस्वी परतिरस्करणे चतुरो भवतीति सामान्यं विशेषेण समर्थ्यते ।

अथ तर्कन्यायमूलालङ्कारनिरूपणानन्तरं वाक्यन्यायमूलालङ्कारा निरूप्यन्ते ।

'उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् ।
अनूद्देशो भवेद्यत्र तद्यथासंख्यमुच्यते ॥'

यत्र येन क्रमेणोद्दिष्टाः पदार्थास्तेनैव क्रमेणानूद्दिश्यन्ते तत्र यथासंख्यालंकारः ॥

यथा—

कीर्तिप्रतापविभवैरिन्दुरविश्रीदनामानि ।
विस्मारयति समस्तान्निस्तुलचरितस्स एष नञ्जविभुः ॥

'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत् ।
कैमुत्यन्यायतस्सा स्यादर्थापत्तिरलङ्क्रिया ॥'

यत्र यस्य कस्यचिदर्थस्य निष्पत्तौ तत्समानन्यायेन कैमुत्येनार्थान्तरमापतति तत्रार्थापत्तिरलङ्कारः । न चात्रानुमानशङ्का । कैमुत्यन्यायरूपत्वात् । समानन्यायो ह्यर्थापत्तिप्रयोजकः । न च समानन्यायस्य व्याप्तिरूपता । अनुमानं व्याप्तिमुपजीव्य प्रवर्तते । ततो न तत्रास्यान्तर्भावः । अयमलङ्कारः प्रकृतादप्रकृताक्षेपः, अप्रकृतात्प्रकृतापेक्ष इति द्विविधः ।

यथा—

आकर्ण्य नञ्जक्षितिपालमौलेरौदार्यमाखण्डलवन्यवृक्षाः ।
आश्चर्यभावस्तिमिता यदि स्युः मितप्रदानाः किमुतान्यभूपाः ॥

अत्र कल्पवृक्षाणां विस्मयकारणादप्रकृतात्प्रकृतमितरराजविस्मयकरणमाक्षिप्यते ।

द्वितीयं यथा—

कल्पान्तोन्मिषदम्बुराशिविचलत्कल्लोलकोलाहल-
प्राग्भारप्रथनप्रकामकरणप्रौढाट्टहासोद्भटाः ।
भूपालाश्शतलक्षशोऽपि मिलिता नालं रणोत्साहिनो
नञ्जक्ष्माधिपतेरमर्षशकलस्यान्येषु का वा कथा ॥

अत्र बहुशस्समुदितेष्वपि क्ष्मापालेषु नञ्जराजक्रोधशकलापर्याप्तत्वकथनेन प्रकृतेनाप्रकृतं व्यस्तेषु राजसु तदपर्याप्तत्वमाक्षिप्यते ।

वस्तुष्वेकमनेकेषु प्राप्तं यत्र नियम्यते ।
एकत्रैव भवेत्तत्र परिसङ्ख्या चतुर्विधा ॥

इयं प्रश्नपूर्विका ततोऽन्यथा चेति द्विविधा । पुनः प्रत्येकं वर्जनीयार्थस्य शाब्दत्वार्थिकत्वाभ्यां द्विविधेति संभूय चतुर्विधा ।

तत्र प्रश्नपूर्विका शाब्दवर्जनीयार्था यथा—

गाम्भीर्येण गरीयसा विजयते को वा महीमण्डले
नेता नञ्जनरेन्द्रलोकतिलकस्सप्तापि नैवार्णवाः ।
सौन्दर्येण समस्तसारसुदृशां संमोहदायी च कः
स श्रीमान् कलुले कुलाम्बुधिभवद्राकाशरच्चन्द्रमाः ॥

पूर्वार्धे सप्तसु चार्णवेषु गाम्भीर्येण सर्वोत्कृष्टवर्तनरूपार्थवर्जनस्य शाब्दत्वाच्छाब्दवर्जनीया । उत्तरार्धे वर्जनीयार्थस्यार्थिकत्वादार्थवर्जनीया परिसङ्ख्या ।

अप्रश्नपूर्विकाशाब्दवर्जनीया यथा—

परं नैर्मल्यश्रीर्यशसि कलुले भूपतिमणे-
र्न गङ्गायां नो वा शिशिरकिरणे नो हिमगिरौ ।
द्विषत्सङ्घा एव क्षितिधरगणा नञ्जनृपति-
र्मरुत्वानेवाभूदसिरभवदस्यैव कुलिशम् ॥

अत्राप्रश्नपूर्विका शाब्दवर्जनीयार्था पूर्वार्द्धे, उत्तरार्द्धे तु आर्थवर्जनीया ।

श्लेषालङ्कारसङ्क्रान्ता परिसंख्या विशेषतः ।
चमत्करोतीति केचित्तामाहुः प्रागलङ्कृतिम् ॥

यथा—

कर्णच्छेदः पाण्डवानां चरित्रे काव्ये चाद्ये शैवधर्मोविभङ्गः ।
स्नेहप्रासो दीपनालेष्वभूवन्नाबिभ्राणे नञ्जभूपे धरित्रीम् ॥

उत्तरं प्रश्नपूर्वञ्चेदुत्तराद्वा बहिर्यदि ।
प्रश्न उन्नीयते तत्र भवेद्विविधमुत्तरम् ॥

अत्र परिसंख्याव्युदासाय व्यवच्छेद्यं विनैवेति विशेषणं देयम् ।

प्रश्नपूर्वकमुत्तरं यथा—

कः कोरकयति कीर्तिं दातृत्वगुणस्स कस्य नञ्जविभोः ।
को वाऽस्य तद्धटयिता पुरहरचरणाब्जसेवनोल्लासः ॥

उन्नेयप्रश्नं यथा—

यस्मिन् कस्मिन् कलयति कृपां नञ्जभूपस्सकृच्चेत्
तत्सौभाग्यं त्रिदशपतिनाऽप्यर्थनीयं तपोभिः ।
यस्मै[1] क्रुध्यत्यपि यदि मनाक्तं परित्रातुमग्रे ।
तस्य स्थातुं प्रभवति तरां नैव पश्यामि कोऽपि ॥

अत्र कृतिनायकप्रतिभटसचिवोक्तिरियम् । अनया सचिवान्प्रति नञ्जभूपकृपासम्पादने किं फलं विरोधसम्पादनेन का हानिरिति प्रत्यर्थिभूपप्रस्तावितं प्रश्नद्वयमुन्नीयते । इत्युन्नेयप्रश्नोऽयमलङ्कारः ।

प्रश्नोत्तराभिन्नमेकमुत्तरं चित्रमुत्तरम् ।

यथा—

के नन्दयन्ति सुकवीन् स्तुत्यः को वा जनैर्विभवः ।
भुवि लसति कस्य स्रष्टा(व?)मद्भुतचरितः स एष नञ्जविभुः ॥

पूर्वार्धे प्रश्नद्वयस्यैकमुत्तरम् । उत्तरार्धे प्रश्नाभिन्नमुत्तरम् ।

के नित्यमर्थिसेव्याः कः कामुककौतुकाय सुरतरवः ।
कस्य मदो विभवस्त्वां नञ्जेन्द्र नमन्ति कीदृशाः करणाः (रिणः) ॥

---

१ यस्मिन् OL

अत्रापि प्रश्नद्वयस्यैकमुत्तरम् ।

वाक्यन्यायमूलप्रस्तावाद्विकल्पो निरूप्यते ।

समप्रमाणवैशिष्ट्याद्युगपत्प्राप्तयोः क्वचित् ।
विरोधश्चेत्सदृशयोर्विकल्पस्स तु कथ्यते ॥

यत्र समं हि विरुद्धद्वयं युगपत्प्रस्तुतं विकल्पार्हं तेन तुल्यप्रमाणवैशिष्ट्यात् समबलयोर्द्वयोरेकत्र युगपत्प्राप्तौ विरोधस्स्फुरति तत्र विकल्पालङ्कारः।

यथा—

किमुष्ट्रासिकया भूयो भवद्भिर्भूमिपालकाः ।
स्व कोशं नञ्जराजस्य कोशं वा नीयतां करः ॥

अत्र खड्गं धत्त अन्यथा नञ्जराजस्य धनादिकं प्रेषयतेति कल्पद्वयेऽपि समबलत्वम् । तत्र विरुद्धत्वाद्यौगपद्यासंभवेन विकल्पः ।

विकल्पप्रतिपक्षभूतस्समुच्चयो निरूप्यते ।

क्रियाणां वा गुणानां वा युगपत्परिमेलनम् ।
एकत्र वर्ण्यते यत्र स द्वेधा स्यात्समुच्चयः ॥

यथा—

विणमेइ अज्ज धणुकं मअणो उज्जेइ चन्दिमो अ पुरो ।
अणुलिंपंति अ ललना सहि णञ्जविहू वि आअदो अ भवे ॥

अत्र धनुर्विनमनाद्यनेकक्रियाणां युगपदवस्थितिः ।

गुणसमुच्चयो यथा—

अणिमा सुरभूरुहप्रसङ्गे गरिमाचोल्लसति द्विषां विषादे ।
लघिमा च पुरान्नृपप्रशस्तौ धरणीं नञ्जविभौ भुजे दधाने ॥

अत्राणुत्वादिगुणानां समुच्चयः । निरुक्तोभयमपि भिन्न विषयकत्वे उदाहरणम् ।

एकविषयकत्वे क्रियासमुच्चयो यथा—

शोभा समुल्लसितकान्ति तरङ्गिताङ्ग्यो
नञ्जक्ष्मारमणचन्द्रमपाङ्गयन्त्यः ।
मुह्यन्ति मञ्जु विहरन्ति च विभ्रमन्ति
रज्यन्ति चापि विलसन्ति हसन्ति कान्ताः ॥

---

( छा ) विनमयत्यद्य धनुर्मदनो उद्यति चन्द्रश्च पुरः अनुलिम्पन्ति च ललनाः सखि नञ्जविभुरप्यागतश्च भवेत् ॥

अत्रानेकक्रियाणां समुच्चयः ।

एकविषयगुणसमुच्चयो यथा—

कीर्तिप्रतापसङ्क्रान्तभुवने नञ्जभूवरे ।
विजृंभते सदा दिक्षु धावल्यमपि रक्तिमा ॥

अत्र गुणयोरेकविषयत्वेन समुच्चयः ।

खलेकपोतन्यायेन स्वतन्त्रैर्बहुकारणैः ।
मिलितैः क्रियते कार्यं यत्रैकं तत्र तत्करः ॥

यत्र खलेकपोतन्यायेन मिलितानां बहुकारणानां एकस्यैव कार्यस्योत्पादने समुद्योगस्स तत्करालङ्कारः । अयमेव द्वितीयसमुच्चय इति व्यवह्रीयते ।

यथा—

औन्नत्यमष्टापदशैलमित्रं गाम्भीर्यमम्भोधिभिरर्थनीयम् ।
श्रीस्सत्यवाक्त्वञ्च वदन्ति नेतुर्नञ्जक्षितीन्द्रस्य कुलप्रतिष्ठाम् ॥

अत्रौन्नत्यादीनां नञ्जेन्द्रकुलप्रतिष्ठाकथने प्रत्येकं कारणानां युगपत् खलेकपोतन्यायेन मेलनम् ।

काकतालनयाद्धेतौ यत्र वाऽन्येन हेतुना ।
प्रक्रान्तकार्यसौकर्यं समाधिः स्यादलङ्कृतिः ॥

यत्रैकस्मिन् हेतौ कार्यसाधनया प्रवृत्ते अन्येन हेतुना काकतालन्यायेन प्रक्रान्तकार्यसौकर्यं क्रियते स समाधिरलङ्कारः । काकतालेति विशेषणात्तत्करान्द्भेदः, तत्करे तु कारणमेलनं खले कपोतन्यायेन ।

यथा—

दूरे क्वापि निलीयशैलशिखरप्रान्तेष्वसृन्नक्षितुं
धावन्तः कतिचित्पदानि तरसा पादाग्रलग्नं स्वतः ।
वल्मीकं समुपाश्रयन्त गलितत्रासाः प्रतिक्ष्माभृत-
स्तन्निर्वर्त्य निवृत्तमेव समितेर्नञ्जक्षमाधारिणा ॥

अत्र शैलप्रान्तानुद्दिश्य धावनरूपेण कारणेन प्रक्रान्तशत्रुप्राणरक्षणरूपकार्यमेवार्थादापतितवल्मीकारोहणरूपकार्यान्तरं सुकरीकरोतीति समाधिरलङ्कारोऽयम् ।

अथ लोकन्यायमूलालङ्कारा निरूप्यन्ते ।

भवेद्यत्राद्भुतार्थस्य वर्णनाद्भूतभाविनोः ।
अपरोक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥

यत्राद्भुतवस्तुवर्णनया भूतभाविनोरपि वस्तुनोर्भावकानां हृदि भावनावशेन प्रत्यक्षायमाणत्वं तत्र भाविकालङ्कारः। अध्यवसायासंभवान्नोत्प्रेक्षा। अभ्रान्तिरूपत्वाद्भावनाया न भ्रान्तिमदलङ्कारः। तत्रैव विभावाद्यनुसन्धानेन रसादेर्भाव्यत्वं न त्वद्भुतत्वेन अतस्सर्वोत्तीर्ण एवायमलङ्कारः।

यथा—

अद्यापि नञ्जनृपसङ्गरकौशलं तदालोकयन्ति मनुजाअपि वृत्तपूर्वम्।
अस्त्रान्धकारकवलीकृतरोधसीकं मध्ये मुहुस्स्फुरदसिक्षणरुक्तरङ्गम्॥

अत्र द्यावापृथिवीव्यासशस्त्रान्धकारस्य मध्ये कृपाणस्फुरणविद्युद्विलसिततरङ्गितस्य नञ्जेन्द्रसङ्गरकौशलस्य प्रागेव वृत्तस्यापि भावनया प्रत्यक्षायमाणत्वादद्भुतत्वमिति तद्वर्णनात् भाविकालङ्कारः।

'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे।
यत्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते॥'

यत्र प्रबलप्रतिपक्षस्य प्रतीकारासामर्थ्यात्तदीयतिरस्कारो भवति तत्प्रत्यनीकम्।

यथा—

नञ्जराज तव खड्गकान्तिभिर्निर्जितो दिवि विधुंतुदोरगः।
त्वद्यशःशकलसश्रियं मुहुर्निर्भयं ग्रसति चन्द्रमण्डलम्॥

अत्र नञ्जराजखड्गनिर्जितस्य राहोस्तदीयतिरस्कारासामर्थ्यात्तत्संपादितकीर्तिगतलेशसप्रभस्य चन्द्रस्य तिरस्कार इति प्रत्यनीकम्।

'येन यत्साधितं वस्तु तेनैव क्रियतेऽन्यथा।
अन्येन तदलङ्कारो व्याघात इति कथ्यते॥'

यद्वस्तु येनकेनचित् कर्त्रा येन साधनेन साधितं तेनैव साधनेनान्येन कर्त्रा यदन्यथा क्रियते स व्याघातालङ्कारः।

यथा—

दर्पान्धैरवनीपालैर्भुजेनायासितां महीम्।
विनेता वीरनञ्जेन्द्रो भुजेन सुखयत्यसौ॥

अत्र भुजेन दृप्तराजसम्पादितस्य विश्वंभरायासस्य नञ्जराजभुजेन सुखकरणेनान्यथाकरणोक्तेर्व्याघातालङ्कारः।

क्रमादेकमनेकस्मिन् अनेकमपि यत्र वा।
एकस्मिन् वर्तते तत्र पर्यायालङ्कृतिं विदुः॥

अत्र क्रमविशेषणं युगपदनेकत्रैकस्यावस्थानरूपस्य विशेषालङ्कारस्य व्यवच्छेदार्थं । विनिमयाभावान्न परिवृत्तिः ।

तत्रानेकस्मिन्नेकं यथा—

आदौ हे हयनाथ बाहुकदलीदन्तावलेन्द्रे ततः
कोपाटोपकषायिताक्षिबलनत्रस्यत्पयोधौ विभौ ।
स्वैरं वा समुपेत्य सर्वजगतां विस्मापकैर्विभ्रमैः
शौर्ये श्रीरधुना विराजति सुखं नञ्जक्ष्मावल्लभे ॥

अत्रैकस्या एव शौर्यश्रियः कार्तवीर्यजेतरि रामचन्द्रे नञ्जराजे च क्रमेणावासकथनादनेकस्मिन्नेकमिदम् ।

एकस्मिन्ननेकं यथा—

कलुलेन्द्रपालविमतक्षमाभृतां सदनेषु येषु समभून्मृगीदृशाम् ।
प्रथमं सलीलवचनोदयोऽधुना प्रसरन्ति तेषु कटपूतनारवाः ॥

विमतक्षमाभृतां सदनेषु मृगीदृशां प्रथमं सलीलवचनोदयः, इदानीं कटपूतनारव इत्येकत्रानेकम् ।

'असंलक्षितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यते ।'

निपुणतरमात्रज्ञेयस्यार्थस्याकारेङ्गिताभ्यां यत्र प्रकाशनं स सूक्ष्मालङ्कारः । यथा—

उर्वीमण्डलपालने कुतुकिनः संत्येव भूपाः शतं
तेषामन्यतमस्स नञ्जनृपतिः किं वाधिकः कथ्यताम् ।
इत्थं प्रत्यवनीभुजामनुपदं साटोपमा पृच्छता-
मग्रे हस्तिपदं विलिख्य सचिवा मौनं वहन्ते तराम् ॥

अत्र नञ्जभूपतिर्बहूनां भूपानामन्यतमः उताधिको वेति प्रत्युर्वीभृतां प्रश्ने सचिवाः [सर्वं] हस्तिपदे मग्नमिति न्यायोद्घोषणद्वारा सर्वेऽपि तद्व्याप्या एवेत्यर्थस्य विदग्धमात्रज्ञेयस्य प्रकाशनात् सूक्ष्मालङ्कारः ।

## उदात्तालङ्कृतिः सा स्याद्यत्समृद्धार्थवर्णनम् ।

अत्रार्थवर्णनमात्रस्य स्वभावोक्त्याऽतिप्रसक्तत्वात् समृद्धेत्युक्तम् । न च भाविकाभेदः, यथास्थितस्यैव वस्तुनो भूतभविष्यदाकारेणानुभवप्रथनात् । न चासम्बन्धे सम्बन्धोक्तिरूपातिशयोक्त्यभेदः । दिव्यभोगसमृद्धिमादाय तद्वैजात्यसिद्धेः ।

यथा—

दोष्णा दधत्युदधिकाञ्चिधरां धरित्रीं
नञ्जप्रभौ प्रकृतयः परिपूर्णलाभाः ।
शृण्वन्ति रत्नसदनेषु सुखं वसन्त-
श्चाटूनि नन्दनवनीशुकसारिकाणाम् ॥

अत्र प्रकृतीनां समृद्ध्यतिशयो वर्ण्यते । परिवृत्तिर्विनिमयोऽधिकाल्पसमजस्त्रिधा । विनिमयो नाम वस्तुदानेन वस्त्वन्तरस्वीकरणम् । स त्रिधा । अधिकवस्तुदानेनाल्पवस्तुस्वीकारः, अल्पवस्तुदानेनाधिकवस्तुस्वीकारः, समेन समस्वीकारश्च ।

तत्र प्रथमं यथा—

नञ्जेन्द्र तव खड्गाय समर्प्य विजयश्रियम् ।
तन्मालिन्यं प्रतिक्ष्मापा जवादाददते हृदि ॥

अत्राधिकाया विजयश्रियो दानेन न्यूनस्य खड्गमालिन्यस्य स्वीकारः ।

अल्पवस्तुदानेनाधिकवस्तुस्वीकारो यथा—

नञ्जेन्द्रसैन्यैरनुधावितानां स्त्रियः प्रियाणां वदनेषु दातुम् ।
तृणान्युपादाय मुखान्मृगीणां तासां स्वनेत्रश्रियमर्पयन्ति ॥

अत्र शात्रवयुवतिकटाक्षश्रियोऽधिकायाः परिग्रहणमल्पतृणदानपूर्वकं मृगीणामिति मृगीष्वल्पवस्तुदानपूर्वकोऽधिकवस्तुस्वीकारः ।

समेन समस्वीकारो यथा—

नञ्जोर्वीशयशोभरः स्वरुचिभिः सप्तापि वारां निधी-
नातन्वन् धवलद्युतीनतितरामाक्रान्तदिक्कुञ्जरः ।
तत्कल्लोलपरम्परापरिलसन्मन्दानिलस्पन्दने
नानादेशपरिश्रमोपजनितां श्रान्तिं जहीतेऽञ्जसा ॥

अत्र धवलद्युतिवितरणश्रान्तिपरिहरणयोः परस्परकार्ययोः समत्वम् ।

लोकन्यायमूलालङ्कारनिरूपणप्रस्तावे लोकप्रसङ्गाल्लोकोक्तिछेकोक्ती निरूप्येते ।

'लोकप्रवादानुसृतिर्लोकोक्तिरिति कथ्यते' ।

यथा—

संप्रेष्य नञ्जनृपतेः प्रथमं प्रणामान्
साक्षात्तमेत्य च शनैर्महिमुद्रहामः ।
यस्यापि कस्य शयने स्वपतो जनस्य
वेगोत्थितिः क्व घटतामनिषिद्य किञ्चित् ॥

'छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भता ॥'

यथा—

मत्तोऽपि नैव निपुणा धरणी तथापि श्री नञ्जराजभुज एव सदा विभाति ।
या कापि वा भवतु सैव हि देवकान्ता यस्यां मनः कलयति स्वयमेव राजा ॥

अथ शृङ्खलान्यायमूलालङ्कारा निरूप्यन्ते ।

पूर्वपूर्वं यत्र भजेदुत्तरोत्तरहेतुताम् ।
तत्र कारणमालाख्यमलङ्कारं प्रचक्षते ॥

यथा—

वृद्धार्जितेन विभवेन मदातिरेकस्तेनासमन्त्रिवचनेष्ववहेलनानि ।
तैर्नञ्जराजहृदयस्य महानमर्षो देशप्रवासनमनेन हि दुष्प्रभूणाम् ॥

अत्र पूर्वपूर्वमुत्तरोत्तरं प्रतिहेतुतापन्नम् ।

'यत्रोत्तरोत्तरेषां स्यात्पूर्वपूर्वं प्रति क्रमात् ।
विशेषणत्वकथनमसावेकावली मता ॥'

यत्र पूर्वपूर्वं प्रति उत्तरोत्तरं विशेषणत्वं भजते स एकावल्यलङ्कारः ।

यथा—

निन्द्या नञ्जनृपामित्रा यैरहन्ताऽवलम्ब्यते ।
अहन्ता सापि दूष्यैव या युधि क्वापि लीयते ॥

यथा वा—

विभाति वीरनञ्जेन्दोर्भुजः शौर्येण रञ्जितः ।
शौर्यं च नीतिमहितं नीतिर्वंशक्रमागता ॥

इदं स्थापनेनोदाहरणम् । अपोहनेनापि भवति ।

यथा—

वृद्धा अपि न ते पूज्या विद्यायां ये न शिक्षिताः ।
विद्या सा नैव नञ्जेन्द्रसभां या नावगाहते ॥

पूर्वपूर्वकृतोत्कर्षं भजेचेदुत्तरोत्तरम्।
तत्र मालादीपकाख्यां वदन्ति समलङ्कृतिम्॥

यथा—

विजयः श्रयते खड्गं खड्गो नञ्जविभोः करम्।
तञ्च साम्राज्यचिह्नानि तानि सत्कविवर्ण्यताम्॥

उत्तरोत्तरमुत्कर्षः सारालङ्कार उच्यते।

यथा—

शुभ्रस्त्रिनेत्रमकुटीतटिनीप्रवाहात्
दुग्धाम्बुधिर्दिविचरैरभिमन्थ्यमानः।
तस्मादनुष्णकिरणः शरदि प्रवृद्धः
स्वच्छा ततोऽपि ननु नञ्जनरेन्द्रकीर्तिः॥

यथा वा—

धातुः प्रपञ्चरचनासु मनुष्यजाति-
निर्माणमत्र च नृपान्वयकल्पनानि।
उद्भावनं तुहिनभानुकुलस्य तेषु
स्तुत्याऽपि तत्र किल नञ्जनरेन्द्रसृष्टिः॥

इत्यर्थालङ्कारप्रकरणम्।

अथ संसृष्टिसङ्करौ निरूप्येते।

लौकिकानामलङ्काराणां यथा हिरण्मयादीनां मणिमयादीनाञ्च पृथक्सौन्दर्यहेतूनामन्योन्यसम्बन्धेन चारुत्वातिशयो दृश्यते तथैव काव्यालङ्काराणां रूपकादीनां मिथस्सम्बन्धेन सौन्दर्यातिशयः प्रतीयते। स च सम्बन्धो द्विविधः। संयोगरूपस्समवायरूपश्चेति। संयोगे तिलतण्डुलन्यायः। समवाये क्षीरनीरन्यायः।

तिलतण्डुलसंश्लेषभङ्ग्या या स्यात् परस्परम्।
अलङ्कृतीनां घटना सा संसृष्टिर्निगद्यते॥

यत्र तिलतण्डुलन्यायेन परस्परसम्बद्धा रूपकादयो भवन्ति सा संसृष्टिः। सा च त्रिविधा, शब्दार्थतदुभयगतत्वेन।

तत्र शब्दालङ्कारसंसृष्टिर्यथा—

भीकरकरवाललताजृम्भणदोस्तंभविभ्रमोल्लासैः।
जगताममितानन्दं कलयति नञ्जक्षमापतिर्विजयी ॥

अत्र शब्दालङ्कारयोश्छेकानुप्रासयोः संसृष्टिः।

अर्थालङ्कारयोः संसृष्टिर्यथा—

विप्रेणाम्भोराशिवारांपिबेन क्रीडालूनं विन्ध्यशैलस्य दर्पम्।
श्रुत्वा त्यक्त्वा भूधरानुन्नतत्वं नञ्जक्ष्मापं प्राप्य पुष्यत्यजस्रम् ॥

अत्राम्भोराशिवारांपिबेन विप्रेणेति भङ्ग्यन्तरेणागस्त्यप्रतीतेः पर्यायोक्तम्। उन्नतत्वकर्तृकभूधरत्यागस्यासम्बन्धस्यापि सम्बन्धकल्पनादतिशयोक्तिश्चेत्यनयोः संसृष्टिः।

शब्दार्थालङ्कारसंसृष्टिर्यथा—

दर्पादनादरणमप्युचितार्थवादि-
न्यक्षान्तिरन्य कुशलेष्ववदान्यता च।
नञ्जक्षितीन्द्रविमतस्य जवेन लभ्या-
मत्याहितामुपदिशन्ति दरिद्रमुद्राम् ॥

अत्र तत्करस्यार्थालङ्कारस्य वृत्त्यनुप्रासस्य शब्दालङ्कारस्य च संसृष्टिः।

क्षीरनीरनयाद्योगः सङ्करः समुदीर्यते।

यत्र क्षीरनीरन्यायेनालङ्काराणां संयोगः तत्रसङ्करः।
अङ्गानिभावात्सन्देहाद्वाचकैक्यात्स तु त्रिधा ॥

तत्रापि प्रथमः सजातीयविजातीयभेदेन द्विविधः।

तत्र सजातीयसङ्करो यथा—

उद्यद्दोर्दण्डशुण्डाप्रमथितविमताध्यक्षभूक्षप्रकाण्डा-
नुद्वेलद्दर्पभारादिदमिति पुरतः पार्श्वतो नेक्षमाणान्।
प्रत्युर्वीभृद्गजेन्द्रान्विशिखनखशिखाक्षेपणोत्कीर्णकीर्ति-
स्फूर्जन्मुक्तासमूहो हरिरिव दलयत्येष नञ्जक्षितीन्द्रः ॥

अत्र हरिरिवेत्युपमालङ्कारेण प्रत्युर्वीभृद्गजेन्द्रादिषु उपमालङ्कारः प्रसाद्ध्यत इति सजातीयसङ्करः।

विजातीयसङ्करो यथा—

चर्माम्बरोऽपि मयि गौरवतो दुकूलं
धत्ते निजश्वशुरदत्तमिति प्रसन्ना।

दुर्गां विलोकयति नञ्जनरेन्द्रकीर्त्या
क्रान्तां महेशविधृतामिभराजकृत्तिम् ॥

अत्र नञ्जनरेन्द्रकीर्त्या क्रान्तत्वस्येभराजकृत्तौ कथनात् प्रतीयमानवस्त्वन्तरतिरोधानरूपमीलनालङ्कारेण चर्माम्बरे दुकूलभ्रान्तिः प्रसाद्ध्यत इति मीलनभ्रान्तिमदलङ्कारयोर्विजातीययोः सङ्करः।

एकवाचकानुप्रविष्टः सङ्करो यथा—

जगत्सन्तापहरणः कलाभिरभिरञ्जितः।
राकाचन्द्र इवाभाति कलुले नञ्जभूपतिः ॥

अत्र जगत्सन्तापहरण इत्यर्थसाम्यम्, कलाभिरभिरञ्जित इति शब्दसाम्यम्, तदुभयेऽपि राकाचन्द्र इवेत्येकस्मिन्निवशब्दे प्रविष्टमित्येकवाचकानुप्रवेशः।

सन्देहसङ्करो यथा—

दैन्यसन्तापतप्तानां भूपतिर्नञ्जभूपतिः।
प्रतापविद्रुमस्तोमदामानि तनुते भुवः ॥

अत्र प्रतापः विद्रुमदामेव प्रताप एव विद्रुमदामेति वा इत्युपमारूपकयोः सन्देहालङ्कारः। अत्र साधकं बाधकं वा प्रमाणन्नान्यतरस्यास्तीति सन्देह एव पर्यवसानम्। साधकबाधकप्रमाणसत्त्वे सन्देहनिवृत्तिः।

तत्र साधकं यथा—

कान्त्या कवलिततमसं नञ्जक्ष्मापालकीर्तिचन्द्रमसम्।
अवलम्ब्य सर्वलोकास्तापं दूरे विमुञ्चन्ति ॥

अत्र किर्तिरेव चन्द्रमा इत्यत्ररूपके तापविमोचनादि साधकं प्रमाणम्।

बाधकं यथा—

सर्वसुपर्ववधूटीसन्ततसङ्गीतगीयमानगुणः।
नेता नञ्जनरेन्द्रः स्निग्धां पुष्णाति वसुमतीयुवतिम् ॥

अत्र वसुमती युवतीवेति उपमालङ्कारे स्निग्धामिति विशेषणं बाधकम्। उपमितं व्याघ्रादिभिः सामान्याप्रयोग इत्यनुशासनेन सामान्यप्रयोगस्योपमानसमानविरोधकत्वात्। अत्र पारिशेष्याद्रूपकालङ्कारः। एवमन्येषामलङ्काराणां यथासम्भवं संसृष्टिसङ्करौ।

संक्षोभ्यतां मतिघनैर्मम तु प्रबन्धो नान्यो यदत्र मधुरा बहवः पदार्थाः ।
आलोड्यते हि विबुधैर्विमलः पयोधिर्नान्यो वितीर्णकमलामणिकल्पभूजः ॥
आचन्द्रतारमखिलामरमञ्जुवाणीपुञ्जेन वर्णितगुणानि भवद्यशांसि ।
नञ्जक्षितीन्द्र नयमार्गविधूततन्त्र भूयो जयन्तु भुवनानि चिरं जयन्तु ॥

वाणीयं भुवि वर्धतां बुधजनश्लाघ्या त्रिलोकीजुषां
सौभाग्यैकनिकेतनं च शशिनो वंशः सदा वर्धताम् ।
देवश्चन्द्रकलाधरश्च दयया निर्व्याजमाप्यायितो
नित्यं नञ्जमहीमहेन्द्रहृदये वासं विधत्तां मुदा ॥

आल्लूरतिरुमलकवेरभिनवभवभूतिनाम बिरुदस्य ।
सुहृदा नृसिंहकविना कृतिरकृतनवीनकालिदासेन ॥

करुणारसकल्लोलकलितापाङ्गविक्षणम् ।
कन्दर्पजनकं धाम कल्याणानि करोतु नः ॥

इति श्रीपरमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादित-
निस्सहायदैनन्दिनप्रबन्धनिर्माणसाहसिकनिखिलविद्वज्जनलाल-
नीयसरससाहितिसम्प्रदायप्रवर्तकनरसिंहकविरचिते
नञ्जराजयशोभूषणे अलङ्कारशास्त्रे
अलङ्कारनिरूपणं नाम
सप्तमो विलासः ।

---

इति नञ्जराजयशोभूषणं नामालङ्कारशास्त्रं समाप्तम् ।



प. १५७ अष्टदलपद्मबन्धो यथा—

या सौंभमद्भङ्गा या या रेखात्मशशिश्रिया ।
यागुराढ्या रुद्रजाया याशिभा एष्यदां धिया ॥

अस्योद्धारप्रकारः ।




प्रकारान्तरेणोद्धारप्रकारः ।



प. १५८ प्रकारान्तरेणाष्टदलबन्धलेखनं यथा—

रापाब्धिसासभ्यावितशुभमतिराज्यारवंतासितारा
रातासित्रावरज्यास्तुतवमहधरार्यावपक्ष्माजनं रा।
रा नंजक्ष्मापवर्या महितफलकिरा प्राविदश्रीयमारा
रामाय श्रीद विप्राश्रित शिशिरकराभ्यास ससाब्धिपारा

अस्यायमुद्धारप्रकारः ।



प. १५९ हारबन्धो यथा—

वीरक्ष्मारक्षरत्नोदितदितदिनपङ्कपतापप्रभाव
भागुंभाक्रान्तचेनस्ति(?)तसम समरे मभ्रमद्धयोमराम ।
साराकारामरालीरुचिरुचिरुचितस्फीतमातथ्यशःश्रीः
शस्ता शक्रेभदाभ द्रुभर तव तमांतद्रुजन्नंजराज ॥

अस्योद्धारक्रमः ।



# एतन्निबन्धस्थानां श्लोकानामनुक्रमणिका ।


अ

अक्षत्रभावादिव ... ... १७७
अगूढमपर० ... ... ... ३२
अङ्केऽधिरोप्य ... ... ... १२२
अङ्गानि द्राद्० ... ... ७८
अङ्गो वङ्गो ... ... ... १४२
अचक्रवाकाय ... ... ... १७७
अञ्चत्काञ्ची० ... ... ... २५
अणिमा सुर० ... ... ... २१४
अत्यन्तसुकुमारा ... ... १६
अत्यन्तसुकुमारौ ... ... १८
अत्युज्ज्वलत्त्वं ... ... ... ७१
अत्युद्धतार्थ० ... ... ... १६
अथवा प्रतिपक्ष० ... ... १२
अथापवादः ... ... ... ७८
अद्भुतार्थस्य ... ... ... १४७
अद्यापि नञ्जनृप० ... ... २१६
अनम्रदैत्यान्ध० ... ... २३
अनर्घरत्नोज्ज्वल० ... ... १८४
अनियतसहचर० ... ... २६
अनिष्टवस्तु ... ... ... १०९
अनिष्टाभ्यागमा० ... ... ४४
अनुकूलो दक्षिणश्च ... ... ६
अनुक्तधर्मे वा ... ... ... १६५
अनुरागोद्घाटनोत्या ... ... ११०
अनेन जयिना ... ... ... १८०
अन्तर्मन्दं ... ... ... १३७
अन्तःसञ्जल्प० ... ... ७१
अन्वयति तिमिर० ... ... १२६
अन्यत्राप्रीति० ... ... ५६
अन्यत्वाध्यवसायो ... ... १७५
अन्यथोक्तस्य ... ... ... १९२
अन्यदर्शनस्य ... ... ... २००
अन्यधिकरणा० ... ... ४७
अन्यार्थमेव ... ... ... ९०
अन्योन्यगर्हणं ... ... ... १४८
अन्योन्यप्रथमान० ... ... ३
अन्योन्यरूप० ... ... ... १३९
अन्योन्यवाक्या० ... ... ८८
अन्विष्य चान्विष्य ... ... १०५
अपदस्थसमासं ... ... ६५
अपादः पदस० ... ... ३६
अपायाभावतः ... ... ... १४४
अपि सर्वत्र सस्नेहः ... ... १९२
अपि स्वदेशं ... ... ... १४१
अपूर्णं तद्भवेत् ... ... ६५
अपूर्वसुप्रत्यय० ... ... १८७
अप्रकृताध्यवसा० ... ... १७५
अप्रयुक्तमपुष्टार्थं ... ... ५८
अप्रसिद्धोपमानं ... ... ६८
अप्रस्तुतेन वा० ... ... २०५
अभिनवयवन० ... ... ९३
अभूताहरणं तत्स्या० ... ... ११९
अभूताहरणं मार्गस्तोटको ... ... ७९
अभूताहरणं मार्गो रूपो ... ... ७८
अभूषणेऽपि ... ... ... ५१
अभेदाध्यवसायो हि ... ... १८१
अभेदे भेदकथनं ... ... ,,
अमरपतिममित० ... ... ७१
अमर्षः सापराधे ... ... ४८
अमुष्मिन्नस्तोक० ... ... ५२
अम्बरग्रहणा० ... ... ८४
अम्बां विभाव्य ... ... १४५
अयि मनसि ममैव ... ... ४४

